YASHOVIJAYA JAINA GRANTHAMALA [41]

# THE ABHIDHANACHINTAMANI.

OF

**Kalikala Sarvagna shri Hemachandracharya**

(with his own notes)

EDITED

Under the benign influence and patronage of

SHASTRA VISHARAD JAINACHARYA

**SHREE VIJAYA DHARMA SURI**

BY

His Holiness most devoted servants

Nyayatirtha & Vyakarantirtha Shravak Pandit

**HARGOVINDAS.**

AND

Nyayatirtha & Vyakarantirtha Shravak Pandit

**BEHECHARDAS.**

PUBLISHED BY

NATHALAL LAXMICHAND VAKIL,

Printed By

**Purushotamdas Gigabhai Panchbhaya,**

*Proprietor of the Vidya Vijaya Press, Bhavnagar*

VEER ERA 2441

**Price 3 12 0**

अर्हम् ।

श्रीविजयधर्मसूरिभ्यो नमः ।

## श्रीहेमचन्द्राचार्यविरचितः—

# अभिधानचिन्तामणिः ।



धर्मतीर्थकृतां वाचं नत्वा तत्त्वाभिधायिनीम् ।
स्वोपज्ञनाममालाया विवृतिं विदधाम्यहम् ॥ १ ॥
श्रेयोऽर्थमयमारम्भः किं तत्रात्मविकत्थनैः ? ।
परात्मनिन्दास्तोत्रे हि नाद्रियन्ते मनीषिणः ॥ २ ॥
प्रामाण्यं वासुकेर्व्याडेर्व्युत्पत्तिर्धनपालतः ।
प्रपञ्चश्च वाचस्पतिप्रभृतेरिह लक्ष्यताम् ॥ ३ ॥

तत्रायमादिश्लोकः—

प्रणिपत्यार्हतः सिद्धसाङ्गशब्दानुशासनः ।
रूढयौगिकमिश्राणां नाम्नां मालां तनोम्यहम् ॥ १ ॥

प्रणिपत्यार्हतइति मङ्गलार्थम् । मङ्गलं चाविघ्नेन शास्त्रस्य समाप्त्यर्थम् । सिद्धं प्रतिष्ठां प्राप्तं साङ्गं शब्दानुशासनं यस्येति कर्तृविशेषणम् । अङ्गानि लिङ्गधातुपारायणादीनि । एतावता च शब्दानुशासनेन सहास्या एककर्तृकत्वमाह । एककर्तृकत्वख्यापनं चान्योन्यसंवादात्प्रतीतिदार्ढ्योपदर्शनार्थम् । शब्दानुशासनस्य च कीर्तनं तदधीनः सर्वविद्यानां प्रकर्ष इति प्रदर्शनार्थम् । यदाह—

'वक्तृत्वं च कवित्वं च विद्वत्तायाः फलं विदुः ।
शब्दज्ञानादृते तन्न द्वयमप्युपपद्यते' ॥ १ ॥

रूढादीनां नाम्नां शब्दानां मालाममिधानचिन्तामणिनाम्नीं तनोमि । अहमिति कर्तृनिर्देशः ॥ १ ॥

तत्र रूढान् शब्दान् व्याचष्टे—

व्युत्पत्तिरहिताः शब्दा रूढा आखण्डलादयः ।

प्रकृतिप्रत्ययविभागेनान्वर्थवर्जिता व्युत्पत्तिरहिताः । शब्दा इत्यनुवाद्यनिर्देशः । रूढा इति विधेयपदम् । आखण्डलादय इत्युदाहरणम् । नह्यत्र प्रकृतिप्रत्ययविभागेन

भूमाश्चेति

इतिशब्द प्रकाराय । तन भूपादयोऽपि ॥

कविरूढ्या ज्ञेयोदाहरणावली ।

कवीना रूढि परम्परायाता प्रसिद्धिस्तया न तु कविरूढ्यतिक्रमेण । यथा 'कपाली' इत्यादौ सत्यपि स्वस्वामिभावसबन्धे 'कपाली' इति मत्वर्थीयान्त एव भवति, न तु 'कपालपाल , कपालधन , कपालभुक्, कपालनेता, कपालपति ' इत्यादि ।

जन्यजनकभावसबन्धे यथा–

जन्यात् कृत्-कर्तृ-सृद्-स्रष्टृ-विधातृ-कर-सू समा ॥५॥
जनकाद् योनि-ज रुह-जन्म भू सूत्यणादय ।

जन्यात्कार्यात्परे कृदादयस्तद्वतां जनकाना कारणाना नाम आहु ॥ यथा– विश्वकृत्, विश्वकर्ता विश्वसृद्, विश्वस्रष्टा, विश्वविधाता, विश्वकर , विश्वसू ब्रह्मा । तस्य हि विश्व जन्यमिति रूढि ॥ समशब्द आद्यर्थ । तेन–'विश्वकारक , विश्वजनक ' इत्याद्यपि ॥ कविरूढ्येत्येव । नहि यथा चित्रकृदुच्यते तथा चित्रसू इति ॥५॥ तथा जनकात् परे योन्यादय शब्दास्तद्वता कारणवतां कार्याणा नाम आहु ॥ यथा–आत्मयोनि , आत्मज , आत्मरुह , आत्मजन्मा, आत्मभू , आत्मसूति , ब्रह्मा ॥ तस्य ह्यात्मा कारणमिति रूढि ॥ वक्ष्यमाणस्यादिशब्दस्याभिसबन्धात् सभवादयोऽपि गृह्यन्ते ॥ अणादयस्तु–भृगोरपत्य भार्गव । दितेरपत्य दैत्य । वात्स्यस्यापत्य वात्स्यायन इत्यादि ॥ अत्रापि हि भार्गवादीना भृग्वादयो जनका इति रूढि ॥ 'कविरूढ्या' इत्येव । नहि–आत्मयोनिवत् 'आत्मजनक , आत्मकारक ' इति भवति ॥

धार्यधारकभावसम्बन्धे यथा—

धार्याद् ध्वजा-ऽस्त्र पाण्य ङ्क-मौलि भूषण भृन्निभा ॥ ६ ॥
शालि शेखर मत्वर्थ-मालि भर्तृ-धरा अपि ॥

धार्यवाचकात्परे ध्वजादयो धरान्ता धारकस्य नाम आहु ॥ यथा–वृषध्वज , शूलास्त्र , पिनाकपाणि वृषाङ्क चन्द्रमौलि शशिभूषण , शूलभृत् । निभग्रहणात्तत्सदृशा वृषकेतन–शूलायुध–वृषलक्ष्म–चन्द्रशिरस्–चन्द्राभरणादयो गृह्यन्ते ॥६॥ तथा– पिनाकशाली शशिशेखर शूली, पिनाकमाली । पिनाक मल्ते धारयतीति कृत्वा पिनाकभर्ता गङ्गाधर ॥ कविरूढ्या इत्येव । तेन सत्यपि धार्यधारकसबन्धे न सर्वेभ्यो धार्येभ्यो ध्वजाद्या शब्दा प्रयोज्या । नहि भवति वृषध्वजवत् शूलध्वज शूलास्त्रवत् चन्द्रास्त्र पिनाकपाणिवत् अहिपाणि वृषाङ्कवत् चन्द्राङ्क चन्द्रमौलिवत् गङ्गा

व्युत्पत्तिरस्ति। आदिशब्दात् मण्डपादय ॥ यद्यपि 'नाम च धातुजम्' इति शाक‌टायनमतेन रूढा अपि व्युत्पत्तिमाज, तथापि वर्णानुपूर्वीविज्ञानमात्रप्रयोजना तेषां व्युत्पत्ति, न पुनरन्वयायप्रवृत्तौ कारणमिति रूढा अव्युत्पन्ना एव ॥

यौगिकान् शब्दान् व्याचष्टे-

योगोऽन्वय स तु गुणक्रियासम्बन्धसभव ॥ २ ॥

शब्दाना परस्परमर्थानुगमनमन्वय स योग । स पुनर्योगो गुणात्, क्रियाय सम्बन्धाच्च भवति। गुणो नीलपीतादि । क्रिया करोत्यादिका। सबन्धो वक्ष्यमाण तेभ्य सभवो यस्य योगस्य स तथा ॥ २ ॥

गुणक्रियासबन्धसम्भवयोगेन यौगिकानामुदाहरणम्-

गुणतो नीलकण्ठाद्या क्रियात स्रष्टृसन्निभा ।

गुणतो गुणनिबन्धनो येषा योगस्ते शब्दा नीलकण्ठाद्या । नील कण्ठोऽस्य इ गुणप्राधान्यान्नीलकण्ठ शकर । आदिशब्दात् शितिकण्ठ कालकण्ठ इत्यादि ॥ सख्या पि गुण एव इति त्रिलोचन । तेन-पञ्चबाण षण्मुख अष्टश्रवा दशग्रीव इत्या सगृहीतम् ॥ क्रियात क्रियानिबन्धनो योगो येषा ते स्रष्टृप्रभृतय । सृजति इ सर्जनप्राधान्यात् स्रष्टा ब्रह्मा । एव धाता इत्यादय ॥

सम्बन्ध व्याचष्टे-

स्वस्वामित्वादिसम्बन्धस्तत्राहुर्नाम तद्वताम् ॥ ३ ॥
स्वात् पाल धन-भुग् नेतृ पति-मत्वर्थकादय ।

स्वम् आत्मीयम्, स्वामी यस्तत्र प्रभविष्णु तयोर्भाव स्वस्वामित्वम् । तदा सबन्ध । आदिशब्दाज्जन्यजनकभावादिपरिग्रह । तत्र स्वस्वामिभावसबन्धे पा दय शब्दा स्वात्परे नियोजिता तद्वता स्वामिना नाम आहु ॥३॥ मत्वर्थक इति मतुस्तद्धित । तस्यार्थोऽस्त्यर्थविशिष्टप्रकृत्यर्थेन सह देवदत्तादे सम्बन्ध । तदाघ वा तदस्यास्त्यस्मिन्निति मतु '॥७।२।१॥ इति मतुप्रत्ययविधानात् । मतोर यस्य स मत्वर्थकस्तद्धितो मतुना समानार्थ इत्यर्थ । स च इन्णिकादि । मत्वर्था भिचारान्मतुरपि । आदिशब्दात्पादयोऽपि । 'तत्राहुर्नाम तद्वताम्' इति उत्त त्वप्यनुवर्त्तनीयम् ॥

क्रमेणोदाहरणान्याह-

भूपालो भूधनो भूभुग् भूनेता भूपतिस्तथा ॥ ४ ॥

१ निदान इत्यपि पाठ । २ -अन्वयोऽर्थ इत्यपि पाठ ।

याधान् वाच्यवाचिन शब्दात्परे गामिप्रभृतय तद्वतां वाह्यवतां वाहयितॄणां नाम
हु ॥ यथा-वृषगामी, वृषयान, वृषासन, शम्भु ॥ तस्य हि वृषो यानम् इति
॥ आदिशब्दाद् वृषवाहन इत्यादयोऽपि ॥ 'कविरूढ्या' इत्येव । नहि भवति
-'नरवाहन कुबेर' तथा 'नरगामी, नरयान' इत्यादि ॥

ज्ञातेयसबन्धे यथा—

ज्ञाते स्वसृ-दुहित्रा-ऽत्मजा ऽग्रजा-ऽवरजा-ऽदय ॥ ९ ॥

ज्ञाति स्वजन, तद्वाचिन शब्दात्परे स्वस्रादयस्तद्वतां ज्ञातेयवतां ज्ञातीनां नाम
हु । स्वस्रादीनां च ज्ञातिविशेषवाचित्वात् ज्ञातिविशेषादेव प्रयोगो यथा—यमस्वसा
ना । हिमवद्दुहिता गौरी । चन्द्रात्मजो बुध । गदाग्रज इन्द्रावरजश्च विष्णु ।
दयो हि यमुनादीनां भ्रात्रादिज्ञातय इति रूढि ॥ आदिशब्दात्सोदरादयो
न्ते । यथा-कालिन्दीसोदरो यम । 'कविरूढ्या' इत्येव । नहि भवति यथा-
ना यमस्वसा, तथा शनिस्वसापि ॥ ९ ॥

आश्रयाश्रयिभावसबन्धे यथा—

आश्रयात् सद्मपर्याय-शय-वासि सदा ऽदय ।

आश्रयो निवास तद्वाचिन शब्दात् परे सद्मपर्याया शयवासिसदादयश्च तद्वतां
म आश्रयवतां आश्रितानां नाम आहु ॥ यथा—द्युसद्मान, द्युसदना, दिवौकस ।
वशब्दो वृत्तावकारान्तोऽप्यस्तीति । द्युवसतय दिवाश्रया, द्युशया, द्युवासिन,
द देवा ॥ द्यौ स्वर्ग, स च तेषामाश्रय इति रूढि । 'कविरूढ्या' इत्येव । नहि
ति यथा द्युसद्मानो देवा, तथा भूमिसद्मानो मनुष्या इति ।

वध्यवधकभावसम्बन्धे यथा-

वध्याद् भिद् द्वेपि जिद्-घाति ध्रुग-ऽरि-ध्वासि शासना ॥१०॥
अप्य-ऽन्तकारि दमन दर्पच्छित् मथना ऽदय ।

वध्यो घात्य तद्वाचिन शब्दात्परे भिदादय अन्तकार्यादयोऽपि तद्वता वध
ना नाम आहु ॥ यथा—पुरभित्, पुरद्वेपी पुरजित् पुरघाती, पुरध्रुक्,
रारि, पुरध्वसी पुरशासन, ॥ १० ॥ पुरान्तकारी, पुरदमन, पुरदर्पच्छित्,
रमथन शिव ॥ तस्य हि पुरो वध्य ' इति रूढि ॥ आदिशब्दात्-पुरदारी पुरनि
न्ता, पुरकेतु पुरहा पुरसूदन, पुरान्तक पुरजयीति । वध्य इति वधार्हमानेऽपि ।
न—कालियदमन कालियारि कालियशासन विष्णु । इत्यादयोऽपि गृह्यन्ते ॥
कविरूढ्या' इत्येव । तेन कालियदमनादिवत् कालियघाती इति न भवति ॥

मौलि , शशिभूषणवत् शूलभूषण , शूलशालिवत् चन्द्रशाली, चन्द्रशेखरवत् गङ्गाशे खर , शूलिवत् शूलवान् , पिनाकमालिवत् सर्पमाली, पिनाकभर्तृवत् चन्द्रभर्त गङ्गाधरवत् चन्द्रधर , इति ॥

भोज्यभोजकभावसबन्धे यथा—

भोज्याद् भुग ऽन्धो व्रत लिट् पायि पा-ऽशा ऽशनादय ॥ ७

भोज्य भक्ष्य तद्वाचिन शब्दात्परे भुगादय शब्दास्तद्वता भोज्यवतो भोक्तृ नाम आहु ॥ यथा–अमृतभुज , अमृतान्धस , अमृतव्रता , अमृतलिह , अमृतप यिन , अमृतपा , अमृताशा , अमृताशना , देवा । 'तेषा ह्यमृत भोज्यम्' । इ रूढि ॥ आदिशब्दस्तत्समानार्थभोजनादिशब्दपरिग्रहाय ॥ कविरूढ्या' इत्येव। न यथा अमृतभुज , तथा अमृतवल्भा इति भवति ॥ ७ ॥

पतिकलत्रभावसंबन्धे यथा—

पत्यु कान्ता प्रियतमा वधू-प्रणयिनी निभा ।
कलत्राद् वर रमण-प्रणयी श प्रियादय ॥ ८ ॥

पतिवरयिता तद्वाचकात् शब्दात् कान्तादिसदृशा शब्दा तद्वतीना पतिमती भार्याणा नाम आहु ॥ यथा–शिवकान्ता, शिवप्रियतमा शिववधू शिवप्रणयिनी गौरी ॥ तस्या हि शिव पति इति रूढि ॥ निभग्रहणाद्रमणी वल्लभा प्रिया प्रभृत गृह्यन्ते ॥ कविरूढ्या इत्येव । नहि भवति यथा शिवकान्ता तथा शिवपरिग्रह इति तथा–कलत्रवाचिन शब्दात्परे वरादय शब्दास्तद्वता कलत्रवता वरयितृणा न आहु ॥ यथा–गौरीवर , गौरीरमण गौरीप्रणयी गौरीश गौरीप्रिय शिव तस्य हि गौरा कलत्रम्' इति रूढि ॥ आदिशब्दात् तत्समानार्था पत्यादयो गृह्यन्ते 'कविरूढ्या इत्येव ॥ नहि भवति यथा गौरीवर शिव तथा गङ्गावर इति ॥८॥

सख्यु सम्बन्धे यथा—

सख्यु सखिसमा

सखिवाचकात् शब्दात् परे सखिसमानार्था तद्वता सख्यवता नाम आहु यथा–श्रीकण्ठस्य सखा श्रीकण्ठसख कुबेर । मधुसख काम । समग्रहणात् सुहृ दयो गृह्यन्ते ॥ कविरूढ्या इत्येव । नहि भवति यथा–श्रीकण्ठसखो धनद तथ धनदसम श्रीकण्ठ इति ॥

वाह्यवाहकभावसम्बन्धे यथा–

वाह्याद् गामि याना ऽसनादय ।

त्रिनेत्रपञ्चेपुसप्तपलाशादिपु योजयेत् ।

त्रि-पञ्च-सप्तादिस्थाने अयुग्-विपम-शब्दौ त्रिनेत्रादिपदेपु योजनीयौ। यथा-त्रैनत्र, अयुड्नेत्र, विपमनेत्रश्च शम्भु ॥ पञ्चेपु, अयुगिपु, विपमेपुश्च काम । सप्तपलाश, अयुक्पलाश, विपमपलाशश्च सप्तपर्ण ॥ उभयत्रादिशब्दात् त्रिशक्ति अयुक्शक्ति, विपमशक्तिश्च शम्भु ॥ १५ ॥ एव त्र्यक्ष-पञ्चबाण-सप्तच्छदादिष्वपि ॥

व्युत्पत्त्यन्तरमाह—

गुणशब्दो विरोध्यर्थ नञादिरितरोत्तर ॥ १६ ॥
अभिधत्ते यथा कृष्ण स्यादसित सितेतर ।

गुणवाची शब्दो नञ्पूर्व इतरशब्दोत्तरश्च विरोधिनमर्थमभिधत्ते ॥१६॥ यथा-असित, सितेतरश्च कृष्ण ॥ एवम्-अकृश, कृशेतरश्च स्थूल इत्यादि ॥

व्युत्पत्त्यन्तरमाह—

वार्ध्यादिपु पदे पूर्वे वडवाग्न्यादिपूत्तरे ॥ १७ ॥
द्वयेऽपि भूभृदाद्येपु पर्यायपरिवर्तनम् ।

वार्ध्यादिपु शब्देपु पूर्वस्मिन्नेव पदे पर्यायस्य परिवर्तन भवति ॥ यथा-वार्धि, जलधि, तोयधि ॥ आदिशब्दग्रहणात् जलद, तोयद नीरद इत्यादि ॥ वडवाग्न्यादिपु शब्देपु उत्तरस्मिन्नेव पदे पर्यायस्य परिवर्तन भवति। यथा-वडवाग्नि, वडवानल, वडवावह्नि ॥ आदिशब्दात् सरोजम्, सरोरुहम्, इत्यादि ॥ १७ ॥ भूभृदाद्येपु शब्देपु द्वयेऽपि पूर्वत्र उत्तरत्र च पदे पर्यायस्य परिवर्तनम् ॥ यथा-भूभृत् उर्वीभृत्, भूधर, उर्वीधर ॥ आद्यशब्दात् सुरपतिदेवराज इत्यादय ॥

एव परावृत्तिसहा योगात् स्युरिति यौगिका ॥ १८ ॥

एवमिति—पूर्वत्र उत्तरत्र उभयत्र च पदे परावृत्तिं पर्यायपरिवर्त्तन सहन्ते क्षमन्ते परावृत्तिसहा वार्ध्यादय शब्दा योगाद् अन्वयाद् भवेयु इति यौगिका ॥१८॥

मिश्रा पुन परावृत्त्यसहा गीर्वाणसन्निभा ।
प्रवक्ष्यन्तेऽत्र

गीर्वाणादय शब्दा पूर्वत्र उत्तरत्र उभयत्र पदे पर्यायपरावृत्तिमसहमाना मिश्रा

१ यागा इत्यपि पाठ ।

उक्ता स्वस्वामित्वादय सबन्धभेदा । ते च यथा भिन्नदन्याश्रयाम्यैकस्मा धमा अपि भवन्ति इति दर्शयितुमाह—

विवक्षितो हि सम्बन्ध एकतोऽपि पदाचत ॥ ११ ॥
प्राक्प्रदर्शितसबन्धिशब्दा योज्या यथोचितम् ।

विवक्षानिबन्धनो हि सबन्ध , तत एकस्मादपि वृषादे सबन्धिपदाद् परे स न्धान्तरनिबन्धना वाहनादय शब्दा यथोचित प्रयुज्यन्ते ॥

एतदेवाह—

दृश्यते खलु वाह्यत्वे वृषस्य वृषवाहन ॥ १२ ॥
स्वत्वे पुनर्वृषपतिर्धार्यत्वे वृषलाञ्छन ।
अंशोर्धार्यत्वेंऽशुमाली स्वत्वेंऽशुपतिरंशुमान् ॥ १३ ॥
वध्यत्वेऽहेरहिरिपुर्भोज्यत्वे चाहिभुक् शिखी ।

वाह्यवाहकभावसबन्धविवक्षाया यथा— वृषवाहनो रुद्र ' इति भवति ॥१२॥ त स्वस्वामिभावसबन्धविवक्षाया वृषपति ॥ धार्यधारकभावसबन्धविवक्षाया च 'वृष ञ्छन इत्यपि ॥ तथा-धार्यधारकभावसबन्धविवक्षाया यथा- अंशुमाली रवि भवति । तथा स्वस्वामिभावसबन्धविवक्षाया अंशुपति अंशुमान् इत्यपि ॥१ तथा-वध्यवधकभावसंबन्धे यथा- अहिरिपुमयूर । तथा-भोज्यभोजकभा बन्धे 'अहिभुक्' इत्यपि भवति ॥

सबन्धनिबन्धना व्युत्पत्तिमुक्त्वा व्युत्पत्त्यन्तरमाह—

चिह्नैर्व्यक्तैर्भवेद्व्यक्तेर्जातिशब्दोऽपि वाचक ॥ १४ ॥
तथाह्यगस्तिपूता दिग् दक्षिणाशा निगद्यते ।

चिह्नैर्विशेषणैर्व्यक्तैर्नि सदेहैर्जात्यभिधायकोऽपि शब्दो व्यक्तेर्वाचको भवे व्यक्तेर्नामता यातीत्यर्थ ॥ १४ ॥ तथाहीत्यादिनोदाहरणमाह-अगस्तिना ऋषि शेषेण पूता स्वस्थित्या पवित्रिता इति व्यक्त चिह्नम् । तेन चिह्नितो दिक् जातिशब्दो दक्षिणाशाया व्यक्तेरभिधायी भवति ॥ एव सप्तर्षिपूता दिक् उत्तरा 'अत्रेर्नयनसमुत्थ ज्योतिश्चन्द्र ' इत्यादयोऽपि ॥

व्युत्पत्त्यन्तरमाह—

अयुग् विषमशब्दौ त्रि-पञ्च-सप्तादिवाचकौ ॥ १५ ॥

घ्राणानि, चत्वारि तान्येव चक्षु सहितानि, इन्द्रियाणि येषां ते तथा ॥ ततो द्वीन्द्रिया कृम्यादय, त्रीन्द्रिया पिपीलकादय, चतुरिन्द्रिया दृतादय ॥ २१ ॥ पञ्च स्पर्शनादीनि श्रोत्रसहितानि इन्द्रियाणि येषां ते पञ्चेन्द्रिया । ते च त्रिविधा — स्थलचरा, खचरा, अम्बुचराश्च । तत्र स्थलचरा इभाद्या, खचरा केकिप्रभृतय, अम्बुचरा मत्स्याद्या' ॥ देवा नरा नारकाश्च पञ्चेन्द्रिया एव । न तु तिर्यञ्च इव एकद्वित्रिचतुरिन्द्रिया अपि ॥२२॥ पञ्चमे काण्डे नारका साङ्गा ॥ षष्ठे काण्डे साधारणा सामान्यवाचिन ॥ अव्ययाश्च अत्रेति षष्ठ एव काण्डे प्रस्तोष्यन्ते प्रैक्ष्यन्ते इति ॥

त्वन्ताथादी न पूर्वगौ ॥ २३ ॥

तुशब्दोऽन्ते यस्यासौ त्वन्त, अथशब्द आदिर्यस्यासावथादिश्च शब्द पूर्वं न गच्छति । अग्रिमेण सबध्यते, इत्यर्थ ॥ न्यायसिद्ध चैतत् । तुना पूर्वस्माद्विशेषद्योतनात् । अथशब्देन चाथान्तरारम्भात् । यथा—

'स्यादनन्तजिदनन्त सुविधिस्तु पुष्पदन्त' इति,

'मुक्तिर्मोक्षोऽपवर्गोऽथ मुमुक्षु श्रमणो यति' इति भ्रान्तिस्थानविषये चैतत् इति ॥ २३ ॥

अर्हन् जिन पारगतस्त्रिकालवित्क्षीणाष्टकर्मा परमेष्ठ्यधीश्वर ।
शभु स्वयम्भूर्भगवान् जगत्प्रभुस्तीर्थङ्करस्तीर्थकरो जिनेश्वर ॥२४॥
स्याद्वाद्यभयदसार्वा सर्वज्ञ सर्वदर्शिकेवलिनौ ।
देवाधिदेवबोधिदपुरुषोत्तमवीतरागाप्ता ॥ २५ ॥

चतुस्त्रिंशतमतिशयान् सुरेन्द्रादिकृतां पूजा चार्हतीत्यर्हन् "सुगृद्विषार्ह सत्रिशत्रुस्तुत्ये ॥५।२।२६॥ इत्यतृप्रत्यय अरिहननात् रजोहननात् रहस्याभावाचेति वा पृषोदरादित्वात् ॥ १ ॥ जयति रागद्वेषमोहान् इति जिन "जीणृशीदीबुध्यविमीभ्य कित्' ॥ (उणा—२६१) ॥ इति न ॥ २ ॥ ससारस्य प्रयोजनजातस्य वा पार पर्यन्त गत पारगत ॥ ३ ॥ त्रीन् कालान् वेत्ति त्रिकालवित् ॥ ४ ॥ क्षीणानि अष्टौ ज्ञानावरणीयादीनि कर्माणि अस्य क्षीणाष्टकर्मा ॥ ५ ॥ परमे पदे तिष्ठतीति परमेष्ठी ' परमात्स्थ कित्" ॥ (उणा—९२५) ॥ इति इनि प्रत्यये भीरुष्ठानादित्वात् षत्व सप्तम्या अलुप् च ॥६॥ जगता अधीष्टे इत्येवशीलोऽधीश्वर स्थेशभासपिसकसो वर' ॥५।२।८१॥ इति वर ॥७॥ श शाश्वतसुख तत्र भवति शम्भु ॥८॥ ' शसस्वयविप्राद् भुवो ड्व ॥५।२।८४॥ इति ड्व स्वयमात्मना तथाभव्यत्वादिसामग्रीपरिपाकात् न तु परोपदेशात् भवति स्वयम्भू ॥९॥ भगो जगदैश्वर्यं ज्ञान वास्त्यस्य भगवान्

१ प्रवादयन्ते इत्यपि पाठ

योगयुक्ता रुढिमन्तश्च अत्राभिधानचिन्तामणौ नाममालाया प्रवक्ष्यन्ते ॥ सभिभ ग्रहणात् दशरथ कृतान्त प्रभृतय ॥

लिङ्ग तु ज्ञेय लिङ्गानुशासनात् ॥ १९ ॥

लिङ्गमिति पुलिङ्ग स्त्रीलिङ्ग नपुसकलिङ्ग मिश्रलिङ्ग च अस्मदुपज्ञलिङ्गानुशासनात् ज्ञेय निर्णेतव्यम् । अत एव अस्माभिरमरकोशाद्यभिधानमालास्विवाऽत्र लिङ्गनिणयो नोक्त ॥ इह तु विनेयजनानुग्रहार्थे सन्दिग्धलिङ्गानां नानालिङ्गाना च शब्दानां लिङ्गनिणयो वक्ष्यते ॥ १९ ॥

इह हि 'मुक्तगति, देवगति, मनुष्यगति, तिर्यग्गति, नारकगति' इति जीवाना पञ्च गतयो भवन्ति । तद्भेदात् जीवा अपि । 'मुक्ता, देवा, मनुष्या, तिर्यञ्च, नारकाश्च' इति पञ्चधा भवन्ति । ततोऽभिधास्यमानरूढयौगिकमिश्रशब्द विभागमुक्त्वा प्रथमादिकाण्डेष्वभिधास्यमानमुक्तादिनामक्रमनिर्देशमाह—

देवाधिदेवा प्रथमे काण्डे देवा द्वितीयके ।
नरास्तृतीये तिर्यञ्चस्तुर्ये एकेन्द्रियादय ॥ २० ॥
एकेद्रियाः पृथिव्यम्बुतेजोवायुमहीरुह ।
कृमिपीलकलताद्या स्युर्द्वित्रिचतुरिन्द्रिया ॥ २१ ॥
पञ्चेद्रियाश्चेभकेकिमत्स्याद्या स्थलगाम्बुगा ।
पञ्चेन्द्रिया एव देवा नरा नैरयिका अपि ॥ २२ ॥
नारका पञ्चमे साङ्गा षष्ठे साधारणा स्फुटम् ।
प्रस्तोप्यन्तेऽव्ययाश्चात्र

देवाधिदेवा अर्हन्तो वर्तमानातीतानागता । तद्वाचका शब्दा अपि देवाधिदेवा वाच्यवाचकयोरभेदोपचारात् ॥ एव वक्ष्यमाणदेवादिष्वपि योज्यम् ॥ साङ्गा इति सर्वत्र सबध्यते ॥ तत प्रथमे काण्डे गणधराद्यैः सह देवाधिदेवा सवप्राधान्यात् ॥ द्वितीये काण्डे देवा साङ्गा ॥ तृतीये काण्डे मनुष्या साङ्गा । चतुर्थे तिर्यञ्च साङ्गा ॥ ते च एकेन्द्रियादय ॥ २० ॥ तत्र एक स्पर्शन इन्द्रिय येषा ते एकेन्द्रिया पृथ्वीकायादय पञ्च ॥ तत्र पृथ्वीकायोऽनेकविध –शुद्ध-पृथ्वीशर्करावालुकादि । अप्कायो हिमादि । तेज कायोऽङ्गारादि । वायुकाय उत्कलिकादि । वनस्पतिश्चाय शैवलादि । द्वे स्पर्शन–रसने, त्रीणि स्पर्शनरस

१ नर इत्यपि पाठ ।

मन्यते देवेन्द्रादिभिरिलभिनन्दन भुज्यादित्वादनट्, यद्वा गर्भात्प्रभृत्येव अभीक्ष्ण शक्रेणाभिनन्दनाद् अभिनन्दन ॥ ४ ॥ शोभना मतिरस्य सुमति, यद्वा गर्भस्थे जनन्या सुनिश्चिता मतिरभूदिति सुमति ॥ ५ ॥ निष्पङ्कतामङ्गीकृत्य पद्मस्येव प्रभाऽस्य पद्मप्रभ, यद्वा पद्मशयनदोहदो मातुर्देवतया पूरित इति पद्मवर्णश्च भगवानिति वा पद्मप्रभ ॥६॥२६॥ शोभनौ पार्श्वावस्य सुपार्श्व यद्वा गर्भस्थे भगवति जनन्यपि सुपार्श्वाभूदिति सुपार्श्व ॥ ७ ॥ चन्द्रस्येव प्रभा ज्योत्स्ना सौम्यलेश्या विशेषोऽस्य चन्द्रप्रभ, तथा गर्भस्थे देव्या चन्द्रपानदोहदोऽभूदिति चन्द्रप्रभ ॥८॥ शोभनो विधिर्विधानमस्य सुविधि, यद्वा गर्भस्थे भगवति जनन्यप्येवमिति सुविधि ॥ ९ ॥ सकलसत्त्वसन्तापहरणात् शीतल, तथा गर्भस्थे भगवति पितु पूर्वोत्पन्नाचिकित्स्यपित्तदाहो जननीकरस्पर्शादुपशान्त इति शीतल ॥ १० ॥ श्रेयासावसावस्य श्रेयास पृषोदरादित्वात्, यद्वा गर्भस्थेऽस्मिन् केनाप्यनाक्रान्त पूर्वदेवताधिष्ठितशय्या जनन्याक्रान्तेति श्रेयो जातमिति श्रेयास ॥ ११ ॥ वसुपूज्यनृपतेरय वासुपूज्य, यद्वा गर्भस्थेऽस्मिन् वसु हिरण्य तेन वासवो राजकुल पूजितवानिति वसवो देवविशेषास्तेषा पूज्यो वा वसुपूज्य प्रज्ञादणि वासुपूज्य ॥१२॥ विगतो मलोऽस्य विमलज्ञानादियोगाद्वा विमल, यद्वा गर्भस्थे मातुर्मतिस्तनुश्च विमला जातेति विमल ॥ १३ ॥ न विद्यते गुणानामन्तोऽस्य अनन्त, अनन्तजिदेकदेशो वा अनन्त भीमो भीमसेन इति न्यायात् स चासौ तीर्थकृच्च अनन्त तीर्थकृत् ॥१४॥२७॥ दुर्गतौ प्रपतन्त सत्त्वसङ्घात धारयति धर्म, तथा गर्भस्थे जननी दानादिधर्मपरा जातेति धर्म ॥ १५ ॥ शान्तियोगात् तदात्मकत्वात् तत्कर्तृत्वाद्वाय शान्ति तथा गर्भस्थे पूर्वोत्पन्नाऽशिवशान्तिरभूत् इति शान्ति ॥१६॥ कु पृथ्वी तस्या स्थितवानिति कुन्थु पृषोदरादित्वात् तथा गर्भस्थे भगवति जननी रत्नाना कुन्थुराशिं दृष्टवतीति कुन्थु ॥ १७ ॥

सर्वो नाम महासत्त्व कुल य उपजायते ।
तस्याभिवृद्धये वृद्धैरसावर उदाहृत " ॥ १ ॥

इति वचनादर तथा गर्भस्थे भगवति जनन्या स्वप्ने सर्वरत्नमयोऽरो दृष्ट इत्यर ॥१८॥ परीषहादिमल्लजयान्निरुक्तान्मल्लि तथा गर्भस्थे भगवति मातु सुरभिकुसुममाल्यशयनीयदोहदो देवतया पूरित इति मल्लि ॥१९॥ मन्यते जगतस्त्रिकालावस्थामिति मुनि 'मनेरुदेतौ चास्य वा ॥ (उणा–६१२) ॥ इति इप्रत्यये उपान्त्यस्योत्व शोभनानि व्रतान्यस्य सुव्रत मुनिश्चासौ सुव्रतश्च मुनिसुव्रत तथा गर्भस्थे जननी मुनिवत् सुव्रता जातेति मुनिसुव्रत ॥२०॥ परीषहोपसर्गादिनामनात् 'नमेस्तु वा ॥ (उणा ६१३)॥ इति विकल्पेनोपान्त्यस्येकाराभावपक्षे नमि यद्वा गर्भस्थे भगवति परचक्रनृपै अपि प्रणति कृतेति नमि ॥२१॥ धर्मचक्रस्य नेमिवनेमि नेमीतीन्न

अतिशायने मतु ॥१०॥ जगता प्रभु जगत्प्रभु ॥११॥ तीयते ससारसमुद्रोऽनेनेति तीर्थं प्रवचनाधारश्चतुर्विध सङ्घ प्रथमगणधरो वा । यदाहु –"तित्थ भन्ते तित्थ तित्थयरे तित्थ गोअमा अरिहा तावनियमा तित्थकरे तित्थ पुण चाउवण्णे समणसघे पढमगणहरे वा" तत्करोति तीर्थङ्कर , तीर्थकर "हेतुतच्छीलानुकूले"॥५।१।१०३॥ इति टे 'नवाखित्कृदन्ते"॥३।२।११७॥ इत्यन योगविभागव्याख्यानाद्वा मोऽन्त ॥ १२ ॥ १३ ॥ रागादिजेतारो जिना केवलिन तेषामीश्वरो जिनेश्वर ॥ १४ ॥ ॥ २४ ॥ स्यादित्यव्यय अनेकान्तवाचक तत स्यादित्यनेकान्त वदति इत्येव-शील स्याद्वादी स्याद्वादोऽस्यास्ति वा स्याद्वादी यौगिकत्वादनेकान्तवादीत्यपि ॥ १५ ॥ भय इहपरलोकादानाकस्मादाजीवमरणाश्लाघाभेदेन सप्तधा, एतत् प्रतिपक्षतो ऽभय विशिष्टमात्मन स्वास्थ्य नि श्रेयसधर्मनिबन्धनभूमिकाभूत तत् गुणप्रकर्षा-दचिन्त्यशक्तियुक्तत्वात् सर्वथा परार्थकारित्वात् ददाति इति अभयद ॥ १६ ॥ सर्वेभ्य प्राणिभ्यो हित सार्व सर्वीय इत्यपि 'सर्वाण्णो वा" ॥७।१।४३॥ इति वा ण ॥ १७ ॥ सर्वं जानाति इति सर्वज्ञ ॥ १८ ॥ सर्वं पश्यतीत्येवशील सर्वदर्शी ॥ १९ ॥ सर्वथावरणविलये चेतनस्वरूपाविर्भाव केवल तदस्यास्ति केवली ॥ २० ॥ देवानामप्यधिदेव देवाधिदेव ॥ २१ ॥ बोधि जिनप्रणातधर्म-प्राप्ति ता ददाति बोधिद ॥ २२ ॥ पुरुषाणामुत्तम सहजतथाभव्यत्वादिभावत श्रेष्ठ पुरुषोत्तम ॥ २३ ॥ वीतो गतो रागो ऽस्माद्वीतराग ॥ २४ ॥ हितोप-देशकत्वात् आप्त इव आप्त ॥ २५ ॥ २५ ॥

एतस्यामवसर्पिण्यामृषभोऽजितशम्भवौ ।
अभिनन्दन सुमतिस्तत पद्मप्रभाभिध ॥२६॥

सुपार्श्वश्चन्द्रप्रभश्च सुविधिश्चाथ शीतल ।
श्रेयासो वासुपूज्यश्च विमलोऽनन्ततीर्थकृत् ॥२७॥

धर्म शान्ति कुन्थुररो मल्लिश्च मुनिसुव्रत ।
नमिर्नेमि पार्श्वो वीरश्चतुर्विंशतिरर्हताम् ॥२८॥

एतस्यामिति वर्तमानायां अवसर्पिण्या दशसागरोपमकोटीकोटिप्रमाणायां कालविशेषे ऋषति गच्छति परमपदमिति 'ऋषिवृषिलुसिभ्य कित्' ॥ ( उणा-३३१) ॥ इत्यभ ऋषभ यद्वा ऊर्वोवृषभलाञ्छनमभूद्भगवतो जनन्या च चतुर्दशानां स्वप्नानामादावृषभो दृष्टस्तेन ऋषभ ॥ १ ॥ परीषहादिभिर्न जित इति अजित यद्वा गर्भस्थे अस्मिन् द्यूते राज्ञा जननी न जितेत्यजित ॥ २ ॥ शं सुखं भवत्यस्मिन् स्तुते शम्भव यद्वा गर्भगतेऽप्यस्मिन्नभ्यधिकसस्यसम्भवात् शम्भवोऽपि ॥ ३ ॥ अभि

मन्यते देवेन्द्रादिभिरित्यभिनन्दन भुज्यादित्वादनट्, यद्वा गर्भात्प्रभृत्येव अभीक्ष्ण शक्रेणाभिनन्दनाद् अभिनन्दन ॥ ४ ॥ शोभना मतिरस्य सुमति, यद्वा गर्भस्थे जनन्या सुनिश्चिता मतिरभूदिति सुमति ॥ ५ ॥ निष्पङ्कतामङ्गीकृत्य पद्मस्येव प्रभाऽस्य पद्मप्रभ, यद्वा पद्मशयनदोहदो मातुर्देवतया पूरित इति पद्मवर्णश्च भगवानिति वा पद्मप्रभ ॥६॥२६॥ शोभनौ पार्श्वावस्य सुपार्श्व, यद्वा गर्भस्थे भगवति जनन्यपि सुपार्श्वाभूदिति सुपार्श्व ॥ ७ ॥ चन्द्रस्येव प्रभा ज्योत्स्ना सौम्यलेश्या विशेषोऽस्य चन्द्रप्रभ, तथा गर्भस्थे देव्या चन्द्रपानदोहदोऽभूदिति चन्द्रप्रभ ॥८॥ शोभनो विधिर्विधानमस्य सुविधि, यद्वा गर्भस्थे भगवति जनन्यऽप्येवमिति सुविधि ॥ ९ ॥ सकलसत्त्वसन्तापहरणात् शीतल, तथा गर्भस्थे भगवति पितु पूर्वोत्पन्नाचिकित्स्यपित्तदाहो जननीकरस्पर्शादुपशान्त इति शीतल ॥ १० ॥ श्रेयासावसावस्य श्रेयास पृषोदरादित्वात्, यथा गर्भस्थेऽस्मिन् केनाप्यनाक्रान्त पूर्वदेवताधिष्ठितशय्या जनन्याक्रान्तेति श्रेयो जातमिति श्रेयास ॥ ११ ॥ वसुपूज्यनृपतेरय वासुपूज्य, यद्वा गर्भस्थेऽस्मिन् वसु हिरण्य तेन वासवो राजकुल पूजितवानिति वसवो देवविशेषास्तेषा पूज्यो वा वसुपूज्य प्रज्ञाद्यणि वासुपूज्य ॥१२॥ विगतो मलोऽस्य विमलज्ञानादियोगाद्वा विमल, यद्वा गर्भस्थे मातुमतिस्तनुश्च विमला जातेति विमल ॥ १३ ॥ न विद्यते गुणानामन्तोऽस्य अनन्त अनन्ताजिदेकदेशो वा अनन्त भीमो भीमसेन इति न्यायात् स चासौ तीर्थकृच्च अनन्त तायकृन् ॥१४॥२७॥ दुर्गतौ प्रपतन्त सत्त्वसङ्घात धारयति धर्म, तथा गर्भस्थे जननी दानादिधर्मपरा जातेति धर्म ॥ १५ ॥ शान्तियोगात् तदात्मकत्वात् तत्कर्तृत्वाचाय शान्ति तथा गर्भस्थे पूर्वोत्पन्नाऽशिवशान्तिरभूत् इति शान्ति ॥१६॥ कु पृथ्वी तस्या स्थितवानिति कुन्थु पृषोदरादित्वात् तथा गर्भस्थे भगवति जननी रत्नाना कुन्थुराशिं दृष्टवतीति कुन्थु ॥ १७ ॥

सर्वो नाम महासत्त्व कुले य उपजायते ।
तस्याभिवृद्धये वृद्धैरसावर उदाहृत ' ॥ १ ॥

इति वचनादर, तथा गर्भस्थे भगवति जनन्या स्वप्ने सर्वरत्नमयोऽरो दृष्ट इत्यर ॥१८॥ परीषहादिमल्लजयानिरुक्तान्मल्लि तथा गर्भस्थे भगवति मातु सुरभिकुसुममाल्यशयनीयदोहदो देवतया पूरित इति मल्लि ॥१९॥ मन्यते जगतस्त्रिकालावस्थामिति मुनि ' मनेरुदेतौ चास्य वा ॥ (उणा–६१२) ॥ इति इप्रत्यये उपान्त्यस्योत्व शोभनानि व्रतान्यस्य सुव्रत मुनिश्चासौ सुव्रतश्च मुनिसुव्रत तथा गर्भस्थे जननी मुनिवत् सुव्रता जातेति मुनिसुव्रत ॥२०॥ परीषहोपसर्गादिनामनात् ' नमेस्तु वा '॥ (उणा ६१३)॥ इति विकल्पेनोपान्त्यस्येकाराभावपक्षे नमि यद्वा गर्भस्थे भगवति परचक्रनृपै अपि प्रणति कृतेति नमि ॥२१॥ धर्मचक्रस्य नमिवनेमि नेमीतीश्च

न्तोऽपि दृश्यते यथा "वन्दे सुव्रतनेमिनौ" इति ॥२२॥ स्पृशति ज्ञानेन सवभावामिति पार्श्व तथा गर्भस्थे जनन्या निशि शयनीयस्थयाऽन्धकारे सर्पो दृष्ट इति गर्भानुभावोऽयमिति मत्वा पश्यतीति निरुक्तात् पार्श्वः पार्श्वोऽस्य वैयावृत्त्यकरो यक्षस्तस्य नाथ पार्श्वनाथ 'भीमो भीमसेन' इति न्यायाद् वा पार्श्व ॥ २३ ॥ विशेषेण ईरयति प्रेरयति कर्माणीति वीर ॥ २४ ॥ एवमवसर्पिण्या अर्हता तीथकराणा चतुर्विंशतिरिति ॥ २८ ॥

[1]ऋषभो वृषभ

वृषलाञ्छनत्वाद् वृषभ ॥

[2]श्रेयान् श्रेयास

सकलभुवनस्यापि प्रशस्यतमत्वेन श्रेयान् ॥

[3]स्यादनन्तजिदनन्त ।

अनन्तकर्मांशान् जयति अनन्तैर्ज्ञानादिभिर्वा जयत्यनन्तजित, यद्वा गर्भस्थिते जनन्या अनन्तरत्नदाम दृष्ट जयति च त्रिभुवनेऽपि इत्यनन्तजित् ॥

[4]सुविधिस्तु पुष्पदन्त

पुष्पकलिकामनोहरदन्तत्वात् पुष्पदन्त ॥

[5]मुनिसुव्रतसुव्रतौ तुल्यौ ॥ २९ ॥

मुनिसुव्रतैकदेश सुव्रत सत्यभामा भामेति न्यायात् तथा मुनिरपि भीमो भीमसेनवत् ॥ २९ ॥

[6]अरिष्टनेमिस्तु नेमि

अरिष्टस्याऽशुभस्य नेमिरिव प्रध्वसकत्वाद् अरिष्टनेमि यद्वा गर्भस्थे भगवति जनन्या रिष्टरत्नमयो महानेमिर्दृष्ट इति रिष्टनेमि अपश्चिमादिशब्दवत् नञ्पूर्वत्वे अरिष्टनेमि ॥

[7]वीरश्चरमतीर्थकृत् ।

महावीरो वर्द्धमानो देवार्यो ज्ञातनन्दन ॥ ३० ॥

चरम पश्चिमाऽन्तिम इति यावत् स चासौ तीर्थकृत् चरमतीर्थकृत् ॥ अन्त रङ्गारिजेतृत्वात् महांश्चासौ वीरश्च महावीर ॥ उत्पत्तेरारभ्य ज्ञानादिभिर्वर्धत इति वर्द्धमान यद्वा गर्भस्थे भगवति ज्ञातकुल धनधान्यादिभिर्वर्धत इति वर्द्ध

---

१ द्वे। २ द्वे। ३ द्वे। ४ द्वे। ५ द्वे। ६ द्वे। ७ षट्।

मान' ॥ देवश्चासौ आर्यश्च देवार्य देवैरर्यतेऽभिगम्यत इति वा देवानां इन्द्रादीनामर्यः स्वामीति वा ॥ ज्ञातकुलोत्पन्नत्वात् ज्ञात सिद्धार्थराज तस्य नन्दनो ज्ञातनन्दन ॥ ३० ॥

गणा नवास्यर्षिसघा

अस्य वीरजिनस्य ऋषीणा सङ्घा समूहा गणा । ते च नवसङ्ख्या । यद्यपि परमेश्वरस्य एकादश गणधरा आसंस्तथापि नवानामेव गणधराणां विभिन्ना वाचना अभवन् । अकम्पिताचलभ्रात्रोर्मेतार्यप्रभासयोश्च यत सदृक्षा एव वाचना अभूवन्निति नवैव गणा ।

यदवोचाम त्रिषष्टिशलाकापुरुषचरिते-

"श्रीवीरनाथस्य गणधरेष्वेकादशस्वपि ।

द्वयोर्द्वयोर्वाचनयो साम्यादासन् गणा नव" ॥१॥ इति ॥

एकादश गणाधिपा ।

इन्द्रभूतिरग्निभूतिर्वायुभूतिश्च गोतमा ॥ ३१ ॥

व्यक्त सुधर्मो मण्डितमौर्यपुत्रावकम्पित ।

अचलभ्राता मेतार्यः प्रभासश्च पृथक्कुला ॥ ३२ ॥

इन्द्रोऽस्य भूयादितीन्द्रभूति' ॥ १ ॥ अग्निरस्य भूयादिति अग्निभूति ॥ २ ॥ वायुरस्य भूयादिति वायुभूति ॥ ३ ॥ "तिक्कृतौ नाम्नि"॥५।१।७१॥ इति तिक् । एते त्रयोऽपि गोतमस्यापत्यानि वृद्धानि ' ऋषिवृष्णि-"॥६।१।६१॥ इत्यण् "भृग्वङ्गिरस्कुत्स-"॥६।१।१२८॥ इत्यादिना तस्य लुपि गोतमा' गोतमवंशजा ॥ ३१ ॥ व्यज्यते गुणैरिति व्यक्तो भारद्वाजगोत्र' ॥ ४ ॥ शोभनो धर्मा ऽस्य सुधर्मा अग्निवैश्यगोत्रज' 'द्विपदाद्धर्मादन्"॥७।३।१४१॥ इत्यन्समासान्त ॥ ५ ॥ गुणैर्मण्ड्यते स्म मण्डित'; मौर्यस्य पुत्रो मौर्यपुत्र मण्डितमौर्ययो पुत्राविति मण्डितपुत्रोऽपि एतौ वाशिष्ठकाश्यपौ ॥ ६ ॥ ७ ॥ न कम्पितवान् अकम्पितो गौतम ॥८॥ अचलस्य भ्राता अचलभ्राता हारितगोत्र ॥ ९ ॥ मा लक्ष्मी इत प्राप्त मेत स चासावार्यश्च मेतार्य ॥ १० ॥ प्रभासते प्रभास एतौ कौण्डिन्यौ ॥ ११ ॥ एव पृथग् विभिन्नानि कुलान्येषा पृथक्कुला इति ॥ ३२ ॥

केवली चरमो जम्बू स्वामी

केवली न तु तीर्थकर चरमोऽन्तिम' । अत पर एतस्यामवसर्पिण्या

केवलिनामसम्भवात् । गुणरत्नमयत्वेन जम्बूद्वीपे जम्बूरिव जम्बू स चासौ स्वामी च जम्बूस्वामी ॥

अथ प्रभवप्रभु ।
शय्यम्भवो यशोभद्र सम्भूतविजयस्तत ॥ ३३ ॥
भद्रबाहु स्थूलभद्र श्रुतकेवलिनो हि षट् ।

प्रभवति अस्मात् श्रुतमिति प्रभव स चासौ प्रभुश्च प्रभवप्रभु ॥ १ ॥ शय्याया भवतीति शय्यम्भव पृषोदरादित्वात् ॥ २ ॥ यशसा भद्र कल्याणो यशोभद्र ॥ ३ ॥ सम्भूतो रागादिविजयोऽस्य सम्भूतविजय ॥ ४ ॥ ३३ ॥ भद्रौ बाहू अस्य भद्रबाहु ॥ ५ ॥ स्थूल उपचित भद्र कल्याणमस्य स्थूलभद्र ॥ ६ ॥ एते षट् श्रुतेन केवलिन श्रुतकेवलिन चतुर्दशपूर्वधरत्वात् ॥

महागिरिसुहस्त्याद्या वज्रान्ता दशपूर्विण ॥ ३४ ॥

परीषहाद्युपद्रवैरकम्प्यत्वात् महागिरिरिव महागिरि कर्मद्रुमोन्मूलने सुहस्तीव सुहस्ती तावाद्यौ येषा ते तथा । गुरुत्वाद् वज्र इव वज्रो वज्रस्वामी । सोऽन्ते येषा ते वज्रान्ता । दशभि पूर्विणो दशपूर्विणो दशपूर्वधरा । दशपूर्वाणि एषां सन्तीत्यर्थ । तत पर दशपूर्वधराणामसम्भवात् ॥ ३४ ॥

इक्ष्वाकुकुलसम्भूता स्याद्द्वाविंशतिरर्हताम् ।
मुनिसुव्रतनेमी तु हरिवंशसमुद्भवौ ॥ ३५ ॥

इक्ष्वाकुनामधेय कुल वश इक्ष्वाकुकुल तत्र सभूता जाता अर्हतामृषभादीनां द्वाविंशति । शेष स्पष्टम् ॥ ३५ ॥

नाभिश्च जितशत्रुश्च जितारिरथ सवर ।
मेघो धर प्रतिष्ठश्च महासेननरेश्वर ॥ ३६ ॥
सुग्रीवश्च दृढरथो विष्णुश्च वसुपूज्यराट् ।
कृतवर्मा सिंहसेनो भानुश्च विश्वसेनराट् ॥ ३७ ॥
सूर सुदर्शन कुम्भ सुमित्रो विजयस्तथा ।
समुद्रविजयश्चाश्वसेन सिद्धार्थ एव च ॥ ३८ ॥
मरुदेवा विजया सेना सिद्धार्था च मङ्गला ।
तत सुसीमा पृथ्वी लक्ष्मणा रामा तत परम् ॥ ३९ ॥

नन्दा विष्णुर्जया श्यामा सुयशा सुव्रताऽचिरा ।
श्रीदेवी प्रभावती च पद्मा वप्रा शिवा तथा ॥ ४० ॥
वामा त्रिशला क्रमत पितरो मातरोऽर्हताम् ।

नह्यति अन्यायिनो हाकारादिभिर्नीतिभिरिति नाभिरन्त्य कुलकर । "नहेभ च" ॥(उणा–६२१) ॥ इति णि ॥१॥ जिता शत्रवोऽनेन जितशत्रु ॥२॥ जिता अरयोऽनेन जितारि ॥ ३ ॥ सवृणोतीन्द्रियाणि सवर ॥ ४ ॥ सकलसत्त्वसन्तापहरणात् मेघ इव मेघ ॥५॥ धरति धात्रीं इति धर ॥६॥ प्रतिष्ठते धमकार्ये प्रतिष्ठ ॥ ७ ॥ महापूज्या सेनाऽस्य महासेन स चासौ नरेश्वरश्च महासेननरेश्वर ॥ ८ ॥ ३६ ॥ शोभना ग्रीवाऽस्य सुग्रीव ॥ ९ ॥ दृढो रथोऽस्य दृढरथ ॥ १० ॥ वेवेष्टि बलै पृथ्वीं विष्णु ॥ ११ ॥ अन्यै राजभिवसुभि धनै पूज्यते इति वसुपूज्य स चासौ राट् च वसुपूज्यराट् ॥ १२ ॥ कृत वमाऽनेन कृतवमा ॥ १३ ॥ सिंहवत् परा क्रमवती सेनाऽस्य सिंहसेन ॥ १४ ॥ भाति त्रिवर्गेण भानु ॥ १५ ॥ विश्वव्यापिनी सेनाऽस्य विश्वसेन स चासौ राट् च विश्वसेनराट् ॥ १६ ॥ ३७ ॥ तेजसा सूर इव सूर ॥ १७ ॥ शोभन दशनमस्य सुदशन ॥ १८ ॥ गुणपयसामाधारभूतत्वात् कुम्भ इव कुम्भ ॥ १९ ॥ शोभनानि मित्राणि अस्य सुमित्र ॥ २० ॥ विजयते शत्रूनिति विजय ॥ २१ ॥ गाम्भीर्येण समुद्रस्यापि विजेता समुद्रविजय ॥ २२ ॥ अश्वप्रधाना सेनाऽस्य अश्वसेन ॥ २३ ॥ सिद्धा अथा पुरुषाथा अस्य सिद्धाथ ॥२४॥ इति ऋषभादीना तीथकराणा क्रमेण चतुर्विंशति पितर इति ॥३८॥ मरुद्भिर्दीव्यते स्तूयते मरुदेवा पृषोदरादित्वात् तलोप । मरुदेव्यपि ॥ १ ॥ विजयते विजया ॥ २ ॥ सह इनेन जितारिस्वामिना वर्तते सेना ॥ ३ ॥ सिद्धोऽर्थोऽस्या सिद्धाथा ॥ ४ ॥ मङ्गलहेतुत्वात् मङ्गला ॥ ५ ॥ शोभना सीमा मयादा अस्या सुसीमा ॥ ६ ॥ स्थेम्ना पृथ्वी इव पृथ्वी ॥ ७ ॥ लक्ष्मी शोभनाऽस्त्यस्या लक्ष्मणा ॥ ८ ॥ धमकृत्येषु रमते रामा ॥ ९ ॥ ३९ ॥ नन्दति सुपुत्रेण नन्दा ॥ १० ॥ वेवेष्टि गुणैर्जगदिति विष्णु ॥ ११ ॥ जयति सतीत्वेन जया ॥१२॥ श्यामवर्णत्वात् श्यामा ॥ १३ ॥ शोभन यशोऽस्या सुयशा ॥ १४ ॥ शोभन व्रतमस्या सुव्रता ॥ १५ ॥ पतिव्रतात्वात् न चिरयति धर्मकार्येषु अचिरा ॥ १६ ॥ श्रीरिव श्री ॥ १७ ॥ देवीव देवी ॥ १८ ॥ प्रभाऽस्त्यस्या प्रभावती ॥ १९ ॥ पद्मेव पद्मा ॥ २० ॥ वपति धमबीजमिति वप्रा । "भीवृधि" ॥ (उणा–३८७) ॥ इति र ॥२१॥ शिवहेतुत्वात् शिवा ॥ २२ ॥ ४० ॥ मनोज्ञत्वाद् वामा पापकार्येषु प्रातिकूल्या द्वा वामा ॥ २३ ॥ त्रीणि ज्ञानदशनचारित्राणि शलति प्राप्नोति त्रिशला लिहादित्वादच् ॥ २४ ॥ इति क्रमेण ऋषभादीना अर्हता चतुर्विंशतिमातर इति ।

स्याद्गोमुखो महायक्षस्त्रिमुखो यक्षनायकः ॥ ४१ ॥
तुम्बुरुः कुसुमश्चापि मातङ्गो विजयोऽजितः ।
ब्रह्मा यक्षेट् कुमारः षण्मुखपातालकिन्नराः ॥ ४२ ॥
गरुडो गन्धर्वो यक्षेट् कुबेरो वरुणोऽपि च ।
भृकुटिर्गोमेधः पार्श्वो मातङ्गोऽर्हदुपासकाः ॥ ४३ ॥

गौरिव मुखमस्य गोमुखः ॥ १ ॥ महाश्चासौ यक्षश्च महायक्षः ॥ २ ॥ त्रीणि मुखान्यस्य त्रिमुखः ॥ ३ ॥ यक्षाणां नायको यक्षनायकः ॥ ४ ॥ ४१ ॥ तुम्बति अदति विघ्नान् तुम्बुरुः 'तुम्बेरुरुः" ॥ (उणा–८१७) ॥ इत्युरुः ॥ ५ ॥ कुस्यति युज्यते पद्मप्रभोपासनाय कुसुमः "उद्वटिकुल्यलि" ॥ (उणा–३५१) ॥ इति कुमः ॥ ६ ॥ मातङ्ग इव महाबलत्वाद् मातङ्गः ॥ ७ ॥ विजयते विजयः ॥ ८ ॥ न जीयते स्म अजितः ॥ ९ ॥ बृहति वर्धते प्रभावोऽस्मिन्निति ब्रह्मा ॥ १० ॥ यक्षाणामीशो यक्षेट् ॥ ११ ॥ कुमारयति क्रीडति कुमारः ॥ १२ ॥ षण्मुखान्यस्य षण्मुखः ॥ १३ ॥ पातं रक्षितमालमनर्थोऽनेन पातालः ॥ १४ ॥ किञ्चिन्नरः किन्नरः ॥ १५ ॥ ४२ ॥ गरुड इव गरुडः प्रचण्डत्वाद् ॥ १६ ॥ गन्धयते अर्दयति विघ्नान् गन्धर्वः ॥ १७ ॥ यक्षाणामीशो यक्षेट् ॥ १८ ॥ कुत्सितं बेरं शरीरमस्य कुबेरः ॥ १९ ॥ वृणोति वाञ्छितमसौ वरुणः ॥ २० ॥ भृकुटिभीषणत्वाद् भृकुटिः ॥ २१ ॥ गां मेधते पवित्रीकरोति गोमेधः ॥ २२ ॥ श्रीपार्श्वजिनस्य सदा पार्श्वौ स्पृशति पार्श्वः सदा तत्पार्श्ववर्तित्वाद्वा ॥ २३ ॥ मातङ्ग इव महाबलत्वात् मातङ्गः ॥ २४ ॥ एते चतुर्विंशतिरपि यक्षाः क्रमेण अर्हतां ऋषभादीनां उपासकाः ॥ ४३ ॥

चक्रेश्वर्यजितबला दुरितारिश्च कालिका ।
महाकाली श्यामा शान्ता भृकुटिश्च सुतारका ॥४४॥
अशोका मानवी चण्डा विदिता चाङ्कुशा तथा ।
कन्दर्पा निर्वाणी बला धारिणी धरणप्रिया ॥ ४५ ॥
नरदत्ताथ गान्धार्यम्बिका पद्मावती तथा ।
सिद्धायिका चेति जैन्यः क्रमाच्छासनदेवताः ॥४६॥

चक्रस्य ईश्वरी चक्रश्वरी अप्रतिचक्रेत्यपि ॥ १ ॥ बलेन न जिता इति अजितबला राजदन्तादित्वात् पूर्वनिपातः । अजितेत्यपि भीमसेनवत् ॥ २ ॥ दुरितानामरिः दुरितारिः ॥ ३ ॥ काल्येव कालिका वर्णेन ॥ ४ ॥ महती चासौ काली

च महाकाली । काञ्चनवर्णाया अपि सञ्ज्ञा ॥ ५ ॥ श्यामा वर्णेन श्यामा अच्युतदेवी त्यपि ॥ ६ ॥ शाम्यति पूजया शान्ता ॥ ७ ॥ भीषणभृकुटित्वात् भृकुटि ॥ ८ ॥ शोभना तारका अस्या सुतारका सुतारेत्यपि ॥ ९ ॥ ४४ ॥ अविद्यमान शोको ऽस्या अशोका ॥ १० ॥ मानवीव मानवी अभिगम्यदर्शनत्वात् ॥ ११ ॥ चण्डा प्रचण्डत्वात् ॥ १२ ॥ लोके विद्यते ज्ञायते विदिता ॥ १३ ॥ अङ्कुशमस्त्यस्या अङ्कुशा अभ्रादित्वाद ॥ १४ ॥ कमित्यव्यय क कुत्सित दर्पयति कन्दर्पा ॥ १५ ॥ निर्वाति भक्ताना दु खाग्नि अनया निर्वाणी ॥ १६ ॥ बलमस्त्यस्या बला ॥ १७ ॥ मातुलिङ्गादीन्यवश्य धरति धारिणी ॥ १८ ॥ धरणोरगेन्द्रस्य प्रिया धरणप्रिया वैरोट्या ॥१९॥४५॥ नरेभ्यो दत्तमनया नरदत्ता ॥ २० ॥ गा धारयतीति गान्धारी पृषोदरादित्वात् ॥ २१ ॥ लोकानामम्बेव अम्बिका कुष्माण्डीत्यपि ॥ २२ ॥ पद्म करेऽस्त्यस्या पद्मावती । "अनजिरादि" ॥३।२।७८॥ इति मतौ दीर्घत्वम् ॥ २३ ॥ सिद्धानयते सिद्धायिका ॥ २४ ॥ एवमेताश्चतुर्विंशतिरपि जिनाना ऋषभादीना भक्ता क्रमेण जिनशासनस्य अधिष्ठायो देवता शासनदेवता ॥ ४६ ॥

वृषो गजोऽश्व प्लवग क्रौञ्चोऽब्ज स्वस्तिक शशी ।
मकर श्रीवत्स खड्गी महिष शूकरस्तथा ॥ ४७ ॥
श्येनो वज्र मृगश्छागो नन्द्यावर्तो घटोऽपि च ।
कूर्मो नीलोत्पल शङ्ख फणी सिंहोऽर्हता ध्वजाः ॥ ४८ ॥

वृषादय चतुर्विंशति अर्हता ऋषभादीना ध्वजा चिह्नानि । एते च दक्षिणाङ्गविनिवेशिनो लाञ्छनभेदा इति ॥ ४७ ॥ ४८ ॥

रक्तौ च पद्मप्रभवासुपूज्यौ शुक्लौ तु चन्द्रप्रभपुष्पदन्तौ ।
कृष्णौ पुनर्नेमिमुनी विनीलौ श्रीमल्लिपार्श्वौ कनकत्विषोऽन्ये॥४९॥

नेमिमुनी इत्यरिष्टनेमिमुनिसुव्रतौ, अन्ये इति उक्तेभ्योऽन्ये ऋषभादय षोडश कनकत्विष सुवर्णवर्णा ॥ ४९ ॥

उत्सर्पिण्यामतीतायां चतुर्विंशतिरर्हताम् ।
केवलज्ञानी निर्वाणी सागरोऽथ महायशा ॥ ५० ॥
विमल सर्वानुभूति श्रीधरो दत्ततीर्थकृत् ।
दामोदर[1] सुतेजाश्च स्वाम्यथो मुनिसुव्रत ॥ ५१ ॥
सुमति शिवगतिश्चैवास्तागोऽथ निमीश्वर ।

---

१ च इत्यपि पाठ ।

अनिलो यशोधराख्य कृतार्थोऽथ जिनेश्वर ॥ ५२ ॥
शुद्धमति शिवकर स्यन्दनश्चाथ सम्प्रति ।

उत्सर्पिण्यामिति दशसागरोपमकोटीकोटिप्रमाणाया कालविशेषे, अतीतायामिति अतिक्रान्ताया, तीर्थकराणा चतुर्विंशति । यथा–केवलज्ञानमस्यास्ति केवलज्ञानी ॥ १ ॥ निर्वाणमस्त्यस्य निर्वाणी ॥ २ ॥ गाम्भीर्येण सागर इव सागर ॥ ३ ॥ महद् व्यापकत्वाद्यशोऽस्य महायशा ॥ ४ ॥ ५० ॥ विगतो मलोऽस्य विमल ॥ ५ ॥ सर्वत्र सर्वज्ञत्वाद् अनुभूतिरस्य सर्वानुभूति ॥ ६ ॥ मुक्तिश्रिय धरति श्रीधर ॥ ७ ॥ दान दत्त तदस्यास्ति दत्त स चासौ तीर्थकृच्च दत्ततीर्थकृत् ॥ ८ ॥ जन्माभिषेके सुरै क्षिप्त पुष्पदाम कण्ठालम्बमानमुदरेऽस्य दामोदर ॥ ९ ॥ शोभन माह्लादकत्वात् तेजोऽस्य सुतेजा ॥ १० ॥ जगता स्वाम्यात् स्वामी ॥ ११ ॥ मुनिश्चासौ सुव्रतश्च मुनिसुव्रत ॥ १२ ॥ ५१ ॥ शोभना मतिरस्य सुमति ॥१३॥ शिवे मोक्षे गतिरस्य शिवगति ॥ १४ ॥ न विद्यते गाम्भीर्यात् स्तागो लब्धमध्यताऽस्य अस्ताग ॥ १५ ॥ परीषहोपसर्गादिनामनानिमि नमेस्तु वा ' ॥ ( उणा ६१३ )॥ इति उपान्त्यस्य वेत्व, स चासौ ईश्वरश्च निमीश्वर ॥१६॥ अनिल इव महाबलत्वाद् अनिल ॥ १७ ॥ यशासि धरति यशोधर ॥ १८ ॥ कृतोऽर्थ पूजाऽस्य कृतार्थ ॥ १९ ॥ जिनश्चासावीश्वरश्च जिनेश्वर ॥ २० ॥ ५२ ॥ शुद्धा निर्मला मतिरस्य शुद्धमति ॥ २१ ॥ शिव करोति शिवकर ॥ २२ ॥ स्यन्दते देशनामृत स्यन्दन ॥ २३ ॥ नित्यप्रवृत्तत्वेन ध्यायमानत्वात् सम्प्रति ॥ २४ ॥

भाविन्या तु पद्मनाभ शूरदेव सुपार्श्वक ॥ ५३ ॥
स्वयप्रभश्च सर्वानुभूतिर्देवश्रुतोदयौ ।
पेढाल पोट्टिलश्चापि शतकीर्तिश्च सुव्रत ॥ ५४ ॥
अममो निष्कषायश्च निष्पुलाकोऽथ निर्मम ।
चित्रगुप्त समाधिश्च सवरश्च यशोधर ॥ ५५ ॥
विजयो मल्लदेवौ चानन्तवीर्यश्च भद्रकृत् ।

भाविन्यामित्यागामिन्यामुत्सर्पिण्यां चतुर्विंशति तीर्थकरा । यथा–पद्म नाभावस्य पद्मनाभ । नाभेर्नाम्नि ॥७।३।१३४॥ इत्यत्समासान्त ॥ १ ॥ रागादीन् प्रति शूरो विक्रमी स चासौ देवश्च शूरदेव ॥ २ ॥ शोभनौ पार्श्वौ अस्य सुपार्श्व स्वार्थिके के सुपार्श्वक ॥३॥५३॥ स्वय प्रकर्षेण भाति स्वयप्रभ ॥४॥ सर्वज्ञत्वात् सर्वानुभूतिरस्य सर्वानुभूति ॥ ५ ॥ देवे श्रुत प्रतीतो देवश्रुत ॥ ६ ॥

उदेति धर्मोऽस्मादित्युदय ॥ ७ ॥ पठति तत्त्व पेढाल "चात्वालकङ्काल" ॥ (उणा ४८०)॥ इत्यादिशब्दादालान्तो निपात्यते ॥ ८ ॥ पोटयति भासते पुटति जन्मत एव ज्ञानत्रयेण श्लिष्यतीति वा पोट्टिल । "स्थण्डिलकपिल"॥(उणा ४८४)॥ इत्यादिशब्दान्निपात्यते ॥ ९ ॥ शत बह्वच कीर्त्तयोऽस्य शतकीर्त्ति ॥१०॥ शोभन व्रतमस्य सुव्रत ॥ ११ ॥ ५४ ॥ नास्ति ममताऽस्य अमम ॥ १२ ॥ निर्गता कषाया अस्मात् निष्कषाय ॥ १३ ॥ निश्चित पोलयति ज्ञानेन महान् भवति निष्पुलाक "शुभिगृहिविदिपुलिगुम्य कित्" ॥ (उणा-२५) ॥ इत्याक ॥ १४ ॥ निर्गता ममताऽस्मात् निमम ॥ १५ ॥ चित्राण्याश्चर्यकारीणि गुप्तानि मनोवाक्कायगुप्तयो ऽस्य चित्रगुप्त ॥ १६ ॥ सदा समाधियुक्तत्वात् समाधि ॥ १७ ॥ सवर आश्रव निरोधोऽस्त्यस्य सवर ॥ १८ ॥ यशो धरति यशोधर ॥ १९ ॥ ५५ ॥ विजयते जन्मादिकल्याणैर्विजय ॥ २० ॥ कर्मभटाना मल्ल इव मल्ल ॥ २१ ॥ दीव्यति ज्ञानक्रिया देव ॥ २२ ॥ अनन्त वीर्य बलमस्याऽनन्तवीर्य ॥ २३ ॥ भद्र करोति भद्रकृत् । भद्रोऽपि २४ ॥

उपसहारमाह—

एव सर्वावसर्पिण्युत्सर्पिणीषु जिनोत्तमा ॥ ५६ ॥

एवमिति चतुर्विशतिश्चतुर्विशति, सर्वासु वर्त्तमानातीतानागतासु अवसर्पिण्युत्सर्पिणीषु कालविशेषेषु जिनोत्तमास्तीर्थकरा भवन्ति इति ॥ ५६ ॥

तेषा च देहोऽद्भुतरूपगन्धो निरामय स्वेदमलोज्झितश्च ।
श्वासोऽब्जगन्धो रुधिरामिष तु गोक्षीरधाराधवल ह्यविस्रम् ॥५७॥
आहारनीहारविधिस्त्वदृश्यश्चत्वार एतेऽतिशया सहोत्था ।

तेषामिति तीर्थकराणा, देह काय अद्भुत लोकोत्तर रूप गन्धश्च यस्य स तथा निरामयो नीरोग स्वेदेन अङ्गजलेन मलेन च त्वगावारककिट्टेनोज्झित स्वेदमलोज्झित एष प्रथम सहोत्थोऽतिशय ॥ श्वास उच्छ्वासनि श्वास, अब्ज पद्म तस्येव गन्धोऽस्या ऽब्जगन्ध इति द्वितीय ॥ रुधिर चामिष च "अप्राणिपशवे" ॥३।१।१३६॥ इति समाहारे रुधिरामिष मासशोणित, गोक्षीरधारावद्धवल पाण्डुरम्, अविस्र, अनामगन्धि इति तृतीय ॥५७॥ आहारोऽभ्यवहरण नीहारो मूत्रपुरीषोत्सर्गस्तयोर्विधि क्रिया न दृश्यते इति अदृश्य मासचक्षुषा न पुनरवध्यादिलोचनेन पुसा । यदाहु — पच्छन्ने आहारनीहारे अदिस्से मसचक्खुणा" एष चतुर्थ ॥ एते चत्वारोऽपि जगतोऽप्यतिशेरते तीर्थकरा एभिरित्यतिशया, सहोत्था सहजन्मान ॥

अथ कर्मक्षयजातिशयानाह—

क्षेत्रे स्थितिर्योजनमात्रकेऽपि नृदेवतिर्यग्जनकोटिकोटेः ॥५८॥

वाणी नृतिर्यक्सुरलोकभाषासंवादिनी योजनगामिनी च ।

भामण्डलं चारु च मौलिपृष्ठे विडम्बिताहर्पतिमण्डलश्रि ॥५९॥

साग्रे च गव्यूतिशतद्वये रुजा वैरेतयो मार्यतिवृष्ट्यवृष्टय ।

दुर्भिक्षमन्यस्वकचक्रतो भयं स्यान्नैत एकादश कर्मघातजा ॥६०॥

योजनप्रमाणेऽपि क्षेत्रे समवसरणभुवि नृणां देवानां तिरश्चां च जनानां कोटीकोटि गणनया स्थितिरवस्थानमिति प्रथमः कर्मक्षयजोऽतिशयः ॥ ५८ ॥ वाणी भाषा अर्द्ध मागधी नरतिर्यक्सुरलोकभाषया संवदति तद्भाषाभावेन परिणमतीत्येवंशीला, योजनमेकं गच्छति व्याप्नोतीत्येवंशीला योजनगामिनी चेति द्वितीयः ॥ भानां प्रभाणां मण्डलं भामण्डलम्, मौलिपृष्ठे शिरः पश्चिमभागे तच्च विडम्बितदिनकरबिम्बलक्ष्मीकमित्यत एव चारु मनोहरमिति तृतीयः ॥ ५९ ॥ साग्रे पञ्चविंशतियोजनाधिके गव्यूति क्रोशद्वयम्, गव्यूतीनां शतद्वये योजनशतं इत्यर्थः, रुजा रोगो ज्वरादिर्न स्यादिति चतुर्थः ॥ तथा वैरं परस्परविरोधो न स्यादिति पञ्चमः ॥ तथा ईतिर्धान्याद्युपद्रवकारी प्रचुरो मूषिकादि प्राणिगणो न स्यादिति षष्ठः ॥ तथा मारिरौत्पातिकं सर्वगतं मरणं न स्यादिति सप्तमः ॥ तथा अतिवृष्टिर्निरन्तरं वर्षणं न स्यादित्यष्टमः ॥ तथा अवृष्टिः सर्वथा वृष्ट्यभावो न स्यादिति नवमः ॥ दुर्भिक्षं भिक्षाणामभावो न स्यादिति दशमः ॥ तथा स्वराष्ट्रात् परराष्ट्राच्च भयं न स्यादित्येकादशः ॥ एवमेकादश अतिशयाः कर्मणां ज्ञानावरणी यादीनां चतुर्णां घातात् क्षयात् जायन्ते इति ॥ ६० ॥

देवकृतानतिशयानाह–

खे धर्मचक्रं चमराः सपादपीठं मृगेन्द्रासनमुज्ज्वलं च ।

छत्रत्रयं रत्नमयध्वजोऽङ्घ्रिन्यासे च चामीकरपङ्कजानि ॥६१॥

वप्रत्रयं चारु चतुर्मुखाङ्गता चैत्यद्रुमोऽधोवदनाश्च कण्टकाः ।

द्रुमानतिर्दुन्दुभिनाद उच्चकैर्वातोऽनुकूलः शकुनाः प्रदक्षिणाः ॥६२

गन्धाम्बुवर्षं बहुवर्णपुष्पवृष्टिः कचश्मश्रुनखाप्रवृद्धिः ।

चतुर्विधाऽमर्त्यनिकायकोटिर्जघन्यभावादपि पार्श्वदेशे ॥ ६३ ॥

...त्वमित्यमी ।

...ता ॥ ६४ ॥

खे आकाशे धर्मप्रकाशकं चक्रं धर्मचक्रं भवतीति देवकृत प्रथमोऽतिशय ॥ तथा खे चमरा इति द्वितीय ॥ तथा खे पादपीठेन सह मृगेन्द्रासनं सिंहासनमुज्ज्वल निर्मलमाकाशस्फटिकमयत्वादिति तृतीय ॥ तथा खे च्छत्त्रत्रयमिति चतुर्थ ॥ तथा पुर रत्नमयो ध्वज इति पञ्चम ॥ तथा पादन्यासनिमित्तं सुवर्णकमलानि भवन्तीति षष्ठ ॥६१॥ तथा समवसरणे रत्नसुवर्णरूप्यमय प्राकारत्रय मनोज्ञं भवतीति सप्तम ॥ तथा चत्वारि मुखानि अङ्गानि गात्राणि च यस्य स तथा तद्भावश्चतुर्मुखाङ्गता भवतीति अष्टम ॥ तथा चैत्याभिधानो द्रुमोऽशोकवृक्ष स्यादिति नवम ॥ तथा अधोमुखा कण्टका भवन्तीति दशम ॥ तथा द्रुमाणामानतिनम्रता स्यादिति एकादश ॥ तथा उच्चैर्भुवनव्यापी दुन्दुभिध्वान स्यादिति द्वादश ॥ वात सुखदत्वादनुकूलो भवतीति त्रयोदश तथा ॥ शकुना पक्षिण प्रदक्षिणगतय स्युरिति चतुर्दश ॥६२॥ तथा गन्धोदकवृष्टिरिति पञ्चदश ॥ बहुवर्णाना पञ्चवर्णाना जानूत्सेधप्रमाणपुष्पाणां वृष्टि स्यादिति षोडश ॥ तथा कचानां केशानामुपलक्षणत्वात् लोम्नां च श्मश्रुण कूर्चस्य, नखाना पाणिपादजानामवृद्धिरवस्थितस्वभावत्वमिति सप्तदश ॥ तथा भवनपत्यादिचतुर्विधदेवनिकायाना जघन्यतोऽपि समीपे कोटिर्भवतीति अष्टादश ॥६३॥ तथा ऋतूना वसन्तादीनां सर्वदा पुष्पादिसामग्रीभिरिन्द्रियार्थानां स्पर्शरसगन्धरूपशब्दानाममनोज्ञानामपकर्षेण, मनोज्ञानां च प्रादुर्भावेनानुकूलत्व भवतीत्येकोनविंश ॥ इति देवै कृता एकोनविंशतिस्तीर्थकृतामतिशया । एते च यदन्यथाऽपि दृश्यन्ते तन्मतान्तरमवगम्यमिति । ते च सहजैश्चतुर्भि कर्मक्षयजैरेकादशभि सह मीलिता-एकत्र योजिताश्चतुस्त्रिंशद्भवन्तीति ॥ ६४ ॥

अथ वचनातिशयानाह—

सत्कारवत्त्वमौदात्त्यमुपचारपरीतता ।
[1]मेघगम्भीरघोषत्व प्रतिनादविधायिता ॥ ६५ ॥
दक्षिणत्वमुपनीतरागत्व च महार्थता ।
अव्याहतत्व शिष्टत्व सशयानामसभव ॥ ६६ ॥
निराकृता योपरत्व हृदयङ्गमतापि च ।
मिथ साकाङ्क्षता प्रस्तावौचित्य तत्त्वनिष्ठता ॥ ६७ ॥
अप्रकीर्णप्रसृतत्वमस्वश्लाघान्यनिन्दता ।
आभिजात्यमतिस्निग्धमधुरत्व प्रशस्यता ॥ ६८ ॥

---

१ मघनिघोषगाम्भीर्यम् इत्यपि पाठ ।

अथ कर्मक्षयजानतिशयानाह—

क्षेत्रे स्थितिर्योजनमात्रकेऽपि नृदेवतिर्यग्जनकोटिकोटेः ॥५८॥

वाणी नृतिर्यक्सुरलोकभाषासंवादिनी योजनगामिनी च ।

भामण्डलं चारु च मौलिपृष्ठे विडम्बिताहर्पतिमण्डलश्रि ॥५९॥

साग्रे च गव्यूतिशतद्वये रुजा वैरेतयो मार्यतिवृष्टयवृष्टय ।

दुर्भिक्षमन्यस्वकचक्रतो भयं स्यान्नैत एकादश कर्मघातजा ॥६०॥

योजनप्रमाणेऽपि क्षेत्रे समवसरणभुवि नृणां देवानां तिरश्चां च जनानां कोटीकोटि सङ्ख्यानां स्थितिरवस्थानमिति प्रथम कर्मक्षयजोऽतिशय ॥ ५८ ॥ वाणी भाषा अर्द्धमागधी नरतिर्यक्सुरलोकभाषया संवदति तद्भाषाभावेन परिणमतीत्येवंशीला, योजनमेकं गच्छति व्याप्नोतीत्येवंशीला योजनगामिनी चेति द्वितीय ॥ भाना प्रभाणां मण्डलं भामण्डलम्, मौलिपृष्ठे शिर पश्चिमभागे तच्च विडम्बितदिनकरबिम्बलक्ष्मीकमित्यत एव चारु मनोहरमिति तृतीय ॥ ५९ ॥ साग्रे पञ्चविंशतियोजनाधिके गव्यूति क्रोशद्वयम्, गव्यूतीनां शतद्वये योजनशत इत्यर्थ, रुजा रोगो ज्वरादिर्न स्यादिति चतुर्थ ॥ तथा वैरं परस्परविरोधो न स्यादिति पञ्चम ॥ तथा इतिर्धान्याद्युपद्रवकारी प्रचुरो मूषिकादि प्राणिगणो न स्यादिति षष्ठ ॥ तथा मारिरौत्पातिक सर्वगत मरण न स्यादिति सप्तम ॥ तथा अतिवृष्टिर्निरन्तरं वर्षणं न स्यादित्यष्टम ॥ तथा अवृष्टि सर्वथा वृष्ट्यभावो न स्यादिति नवम ॥ दुर्भिक्षं भिक्षाणामभावो न स्यादिति दशम ॥ तथा स्वराष्ट्रात् परराष्ट्राच्च भय न स्यादित्येकादश ॥ एवमेकादश अतिशया कर्मणां ज्ञानावरणीयादीनां चतुर्णां घातात् क्षयात् जायन्ते इति ॥ ६० ॥

देवकृतानतिशयानाह—

खे धर्मचक्रं चमरा सपादपीठं मृगेन्द्रासनमुज्ज्वलं च ।

छत्रत्रयं रत्नमयध्वजोऽङ्घ्रिन्यासे च चामीकरपङ्कजानि ॥६१॥

वप्रत्रयं चारु चतुर्मुखाङ्गता चैत्यद्रुमोऽधोवदनाश्च कण्टका ।

द्रुमानतिर्दुन्दुभिनाद उच्चकैर्वातोऽनुकूल शकुना प्रदक्षिणा ॥६२॥

गन्धाम्बुवर्षं बहुवर्णपुष्पवृष्टि कचश्मश्रुनखाप्रवृद्धि ।

चतुर्विधाऽमर्त्यनिकायकोटिर्जघन्यभावादपि पार्श्वदेशे ॥ ६३ ॥

ऋतूनामिन्द्रियार्थानामनुकूलत्वमित्यमी ।

एकोनविंशतिर्दैव्याश्चतुस्त्रिंशच्च मीलिता ॥ ६४ ॥

अन्तराया दानलाभवीर्यभोगोपभोगगा ।
हासो रत्यरती भीतिर्जुगुप्सा शोक एव च ॥७२॥
कामो मिथ्यात्वमज्ञान निद्रा चाविरतिस्तथा ।
रागो द्वेषश्च नो दोषास्तेषामष्टादशाप्यमी ॥७३॥

दानगतोऽन्तराय इत्येको दोष ॥ लाभगतोऽन्तराय इति द्वितीय ॥ वीर्यगतोऽन्तराय इति तृतीय ॥ भुज्यते भोग स्रगादि तद्गतोऽन्तराय इति चतुर्थ ॥ उपभुज्यते उपभोगोऽङ्गनादि तद्गतोऽन्तराय इति पञ्चम ॥ हासो हास्यमिति षष्ठ ॥ रति पदार्थानामुपरि प्रीतिरिति सप्तम ॥ अरती रतिविपर्यय इति अष्टम ॥ भीति भयमिति नवम ॥ जुगुप्सा घृणेति दशम ॥ शोकश्चित्तवैधुर्यमित्येकादश ॥७२॥ कामो मन्मथ इति द्वादश ॥ मिथ्यात्व दर्शनमोह इति त्रयोदश ॥ अज्ञान मौढ्यमिति चतुर्दश ॥ निद्रा स्वाप इति पञ्चदश ॥ अविरतिरप्रत्याख्यानमिति षोडश ॥ राग सुखाभिज्ञस्य सुखानुस्मृतिपूर्व सुखे तत्साधनेऽप्यऽभिमते विषये गर्द्ध इति सप्तदश ॥ द्वेषो दु खाभिज्ञस्य दु खानुस्मृतिपूर्व दु खे तत्साधने वा क्रोध इत्यष्टादश ॥ इत्यष्टादश दोषास्तेषामृषभादीनामर्हतां न भवन्तीति ॥ ७३ ॥

महानन्दोऽमृत सिद्धि कैवल्यमपुनर्भव ।
शिव नि श्रेयस श्रेयो निर्वाण ब्रह्म निर्वृति ॥७४॥
महोदय सर्वदु खक्षयो निर्याणमक्षरम् ।
मुक्तिर्मोक्षोऽपवर्ग

महानानन्दोऽत्र महानन्द ॥ १ ॥ नास्ति मृतमत्र अमृतम् ॥ २ ॥ सिद्ध्यत्यस्यामिति सिद्धि ॥ ३ ॥ सर्वकर्मक्षयात्केवलस्यात्मनो भाव कैवल्यम् ॥ ४ ॥ न पुनर्भवो जन्मात्र अपुनर्भव । न पुनर्भवतीति वा ॥ ५ ॥ सदानन्दमयै शय्यते स्थीयतेऽस्मिन्निति शिवम् । "शीङापो ह्रस्वश्च वा" ॥ (उणा–५०६) ॥ इति व ॥ ६ ॥ निश्चित श्रेयो नि श्रेयसम् । "निसश्च श्रेयस" ॥७।३।१२२॥ इत्यत्समासान्त ॥ ७ ॥ अतिशयेन प्रशस्य श्रेय "गुणाङ्गात्"–॥७।३।९॥ इतीयसौ "प्रशस्यस्य श्र" ॥७।४।३४॥ इति श्रादेश ॥ ८ ॥ निवात्यात्माऽत्रेति निर्वाणम् । "निवाणमवाते" ॥४।२।७९॥ इति साधु ॥ ९ ॥ बृहति वर्द्धतेऽस्मिन्नानन्द इति ब्रह्म पुक्लीबलिङ्ग ॥१०॥ निर्व्रियते सुखीभूयतेऽस्यामिति निर्वृति ॥११॥७४॥ महान् ज्ञानस्योदयोऽत्रेति महोदय ॥ १२ ॥ सर्वदु खाना क्षयोऽत्र सर्वदु खक्षय ॥ १३ ॥ निर्यान्ति सर्वदु खान्यत्र निर्याणम् ॥ १४ ॥ न क्षरति चलत्यस्मादात्मेत्यक्षरम् ।

अमर्मवेधितौदार्यं धर्मार्थप्रतिबद्धता ।
कारकाद्यविपर्यासो विभ्रमादिवियुक्तता ॥ ६९ ॥
चित्रकृत्त्वमद्भुतत्व तथानतिविलम्बिता ।
अनेकजातिवैचित्र्यमारोपितविशेषता ॥ ७० ॥
सत्त्वप्रधानता वर्णपदवाक्यविविक्तता ।
अव्युच्छित्तिरखेदित्व पञ्चत्रिंशच्च वाग्गुणा ॥ ७१ ॥

संस्कारवत्त्व संस्कृतादिलक्षणयुक्तत्वम् ॥ १ ॥ औदात्त्यमुच्चैर्वृत्तिता ॥ २ ॥ उपचारपरीतता अग्राम्यत्वम् ॥३॥ मेघगम्भीरघोषत्व मेघस्येव गम्भीरशब्दत्वम् ॥४॥ प्रतिनादविधायिता प्रतिरवोपेतत्वम् ॥५॥६५॥ दक्षिणत्व सरलत्वम् ॥६॥ उपनीत रागत्व मालवकैशिक्यादिग्रामरागयुक्तता ॥७॥ एते च सप्त शब्दापेक्षयाऽतिशया । अन्ये त्वर्थाश्रया – तत्र महार्थता बृहदभिधेयता ॥ ८ ॥ अव्याहतत्व पूर्वापरवाक्यार्थाविरोध ॥ ९ ॥ शिष्टत्व अभिमतसिद्धान्तोक्तार्थता । वक्तु शिष्टतासूचकत्व च ॥ १० ॥ सशयानामसम्भवोऽसन्दिग्धत्वम् ॥११॥६६॥ निराकृतान्योत्तरत्व परदूषणाविषयता ॥ १२ ॥ हृदयङ्गमता हृदयग्राह्यत्वम् ॥ १३ ॥ मिथ साकाङ्क्षता परस्परेण पदानां वाक्यानां वा सापेक्षता ॥ १४ ॥ प्रस्तावौचित्य देशकालाव्यतीतत्वम् ॥ १५ ॥ तत्त्वनिष्ठता विवक्षितवस्तुस्वरूपानुसारिता ॥ १६ ॥ ६७ ॥ अप्रकीर्णप्रसृतत्व सुसम्बद्धस्य सत प्रसरण, अथवा असम्बद्धाधिकारत्वातिविस्तरयोर भाव ॥ १७ ॥ अस्वश्लाघान्यनिन्दता आत्मोत्कर्षपरनिन्दाविप्रयुक्तत्वम् ॥ १८ ॥ आभिजात्य वक्तु प्रतिपाद्यस्य वा भूमिकानुसारिता ॥१९॥ अतिस्निग्धमधुरत्व घृतगुडादिवत् सुखकारित्वम् ॥२०॥ प्रशस्यता उक्तगुणयोगात् प्राप्तश्लाघ्यता ॥२१॥६८॥ अमर्मवेधिता परमर्मानुद्घट्टनस्वरूपत्वम् ॥ २२ ॥ औदार्यमभिधेयस्यार्थस्यातुच्छत्वम् ॥ २३ ॥ धर्मार्थप्रतिबद्धता धर्मार्थाभ्यामनपेतत्वम् ॥ २४ ॥ कारकाद्यविपर्यास कारककालवचनलिङ्गादिव्यत्ययवचनदोषापेतता ॥ २५ ॥ विभ्रमादिवियुक्तता विभ्रमो वक्तृमनसो भ्रान्तता स आदिर्येषा विक्षेपादीनां ते विभ्रमादयो मनोदोषास्तै र्वियुक्तत्वम् ॥२६॥६९॥ चित्रकृत्त्वमुत्पादिताच्छिन्नकौतूहलत्वम् ॥ २७ ॥ अद्भुतत्व प्रतीतम् ॥ २८ ॥ तथानतिविलम्बिता प्रतीता ॥ २९ ॥ अनेकजातिवैचित्र्य जातयो वर्णनीयवस्तुस्वरूपवर्णनानि तत्संश्रयाद्विचित्रत्वम् ॥ ३० ॥ आरोपितविशेषता वचनान्तरापेक्षया आहितविशेषणत्वम् ॥३१॥७०॥ सत्त्वप्रधानता साहसोपेतता ॥३२॥ वर्णपदवाक्यविविक्तता वर्णादीनां विच्छिन्नत्वम् ॥ ३३ ॥ अव्युच्छित्तिविवक्षितार्थसम्यक्सिद्धियावदव्यवच्छिन्नवचनप्रमेयता ॥ ३४ ॥ अखेदित्व अनायाससम्भव ॥ ३५ ॥ इत्येवमादृता पञ्चत्रिंशद्वाचो गुणा अतिशया भवन्तीति ॥ ७१ ॥

गुरुर्धर्मोपदेशक ॥७७॥

गृणाति धर्मं गुरु "कृग्र ऋत उर्च"॥ (उणा-७३४) ॥ इति उ । धर्मस्योपदेष्टा धर्मोपदेशक । निषेकादिकरो गुरुरित्यन्ये ॥ १ ॥ ७७ ॥

अनुयोगकृदाचार्य

अनुयोग व्याख्या करोत्यनुयोगकृत् । आचर्यते सेव्यत इत्याचार्य , आचारे साधुरिति वा । आचार ग्राहयतीति नैरुक्त , मन्त्रव्याख्याकृदाचार्य इत्यन्ये ॥१॥

उपाध्यायस्तु पाठक ।

उपेत्याधीयतेऽस्मादित्युपाध्याय "इङोऽपादाने तु टिद्वा" ॥५।३।१९॥ इति घञ् ॥ १ ॥ पाठयति इति पाठकोऽध्यापक ॥ २ ॥

अनूचान प्रवचने साङ्गेऽधीती गणिश्च स ॥७८॥

अनूवाचेत्यनूचान ॥ "वेयिवदनाश्वदनूचानम्"॥५।२।३॥ इति काने साधु ॥१॥ प्रोच्यते प्रवचनमागमस्तत्र साङ्गे इत्याचारायङ्गयुक्ते अधीतमनेनाधीती "इष्टादे " ॥७।१।१६८॥ इतीनि 'व्याप्ये क्तेन "॥२।२।९९॥ इति कर्मणि सप्तमी । गण्यते पूज्यतया इति गणि "स्वरेभ्य इ " ॥ (उणा ६०६) ॥ इति इ ॥ २ ॥ ७८ ॥

शिष्यो विनेयोऽन्तेवासी

शासनीय शिष्य 'दृवृग्स्तुजुषेतिशास " ॥५।१।४०॥ इति क्यपि १ "इसास शास "॥४।४।११८॥ इतीसादेश ॥ १ ॥ विनीयते विनेय । " य एचात ॥५।१।२८॥ इति य ॥ २ ॥ गुरोरन्ते वसत्यवश्य इति अन्तेवासी "शयवासिवासेष्वकालात् " ॥३।२।२५॥ इति सप्तम्या अलुप् ॥ ३ ॥ शेषश्चात्र ' शिष्ये छात्र " ॥

शैक्ष प्राथमकल्पिक ।

शिक्षाशीलमस्य शैक्ष । "अङ्स्थान्छत्रादेरञ्"॥६।४।६०॥ इत्यञ् । शिक्षायां भव इति वा "शिक्षादेश्चाण् '॥६।३।१४८॥ इत्यण् ॥ १ ॥ प्रथमकल्प आचारम्भ प्रयोजनमस्य प्राथमकल्पिक , प्रथमकल्पमधीत इति वा 'पदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकात् ॥६।२।११९॥ इतीकण् ॥ २ ॥

सतीर्थ्यास्त्वेकगुरव

---

१ एकम् । २ एकम् ।

अश्यते प्राप्यते क्षीणकर्मभिरिति वा । "मीज्यजिमामदशीवसिकिभ्य सर ' ॥ (उणा–४३९) ॥ इति सर ॥ १५ ॥ कर्मभिर्मुच्यतेऽत्र मुक्ति ॥ १६ ॥ मुच्यते सर्वकर्मभिरत्रेति मोक्ष "मावावद्यमि"–॥ (उणा–५६४) ॥ इति स मोक्ष्यन्ते त्यज्यन्ते दु खान्यत्रेति वा ॥ १७ ॥ कर्मभिरपवृज्यतेऽत्रापवर्ग ॥ १८ ॥ शेषश्चात्र ' निर्वाणे स्यात् शीतीभाव । शान्तिर्नैश्रेयसममृतिक " ॥

अथ मुमुक्षु श्रमणो यति ॥७५॥

वाचयमो यती साधुरनगार ऋषिर्मुनि ।

निर्ग्रन्थो भिक्षु

मोक्तुमिच्छुर्मुमुक्षु ॥ "सन्भिक्षाशंसेरु" ॥५।२।३३॥ इति उ ॥ १ ॥ श्राम्यति तपसेति श्रमण श्रवणोऽपि नन्द्यादित्वादन ॥ २ ॥ यतते मोक्षायेति यति "पदिपठि–' ॥ (उणा–६०७) ॥ इत्यादिना इ ॥ यच्छत्युपरमति सर्वसङ्गेभ्य इति वा ॥ ३ ॥ वाच यच्छति नियमयति वाचयम । "वाचयमो व्रते" ॥५।१।११५॥ इति साधु ॥ ४ ॥ यत यमनमस्त्यस्य यती ॥ ५ ॥ उत्तमक्षमादिभि गुणविशेषैर्भावितात्मा साध्नोति साधु सम्यक्दर्शनादिभि परम पद साधयतीति वा "कृवापाजिस्वदिसाधि '–॥ (उणा–१) ॥ इत्युण् ॥ ६ ॥ नास्त्यगारमस्य अनगार ॥ ७ ॥ ऋषति जानाति तत्त्व ऋषि "नाम्युपान्त्य"–॥ (उणा ६०९) ॥ इति कि , दर्शनाद्वा ऋषि , यद्वदतोत ऋषिर्व किल दर्शनादिति ॥ ८ ॥ मन्यते ऽसौ मुनि "मनेरुदेतौ चास्य वा" (उणा–६१२) ॥ इति इ पुल्लीलिङ्ग ॥ ९ ॥ ग्रन्थात् द्रव्यान्निष्क्रान्तो निर्ग्रन्थ ॥ १० ॥ भिक्षणशीलो भिक्षु । भिनत्ति क्षुधम ष्टप्रकार कर्मेति वा ॥ ११ ॥

अस्य स्व तपो-योग शमादय: ॥७६॥

अस्य मुमुक्षोस्तपोयोगशमादयो धन आदिश दात् क्षान्त्यादय । ततस्तपो धन , योगी, शमभृत्, क्षान्तिमानित्यादीनि यौगिकानि नामानि भवन्तीति ॥ ७६ ॥

मोक्षोपायो योगो ज्ञानश्रद्धानचरणात्मक ।

मोक्षस्योपाय कारणम् । मुमुक्षुभिर्युज्यते योग ज्ञान यथावस्थिततत्त्वावबोध , श्रद्धान सम्यक्तत्त्वेषु रुचि चरण चारित्र सावद्ययोगत्याग तानि आत्मा स्वरूप यस्य स तथा ॥

अभाषण पुनर्मौन

न भाष्यतेऽभाषणम् ॥ १ ॥ मुने कर्म मौन पुल्लीबलिङ्ग 'युवणादण्याद ' ॥७।१।६९॥ इत्यण् ॥ २ ॥

गुरुर्धर्मोपदेशक ॥७७॥

गृणाति धर्मं गुरु "कृग्र मृत उच"॥ (उणा-७३४) ॥ इति उ । धर्मस्योपदेश धर्मोपदेशक । निषेकादिकरो गुरुरित्यन्ये ॥ १ ॥ ७७ ॥

अनुयोगकृदाचार्य

अनुयोग व्याख्या करोत्यनुयोगकृत् । आचर्यते सेव्यत इत्याचार्य , आचारे साधुरिति वा । आचार ग्राहयतीति नैरुक्त , मन्त्रव्याख्याकृदाचार्य इत्यन्ये ॥१॥

उपाध्यायस्तु पाठक ।

उपेत्याधीयतेऽस्मादित्युपाध्याय "इङोऽपादाने तु टिद्वा" ॥५।३।१९॥ इति घञ् ॥ १ ॥ पाठयति इति पाठकोऽध्यापक ॥ २ ॥

अनूचान प्रवचने साङ्गेऽधीती गणिश्च स ॥७८॥

अनूवाचेत्यनूचान ॥ "वेयिवदनाश्वदनूचानम्"॥५।२।३॥ इति काने साधु ॥१॥ प्रोच्यते प्रवचनमागमस्तत्र साङ्गे इत्याचारादङ्गयुक्ते अधीतमनेनाधीती "इष्टादे " ॥७।१।१६८॥ इतीनि "व्याप्ये क्तेन "॥२।२।९९॥ इति कर्मणि सप्तमी । गण्यते पूज्यतया इति गणि "सृेर्भ्य इ " ॥ (उणा ६०६) ॥ इति इ ॥ २ ॥ ७८ ॥

शिष्यो विनेयोऽन्तेवासी

शासनीय शिष्य " दृवृग्स्तुजुषेतिशास " ॥५।१।४०॥ इति क्यपि । "इसास शास "॥४।४।११८॥ इतीसादेश ॥ १ ॥ विनीयते विनेय । " य एचात ' ॥५।१।२८॥ इति य ॥ २ ॥ गुरोरन्ते वसत्यवश्य इति अन्तेवासी "शयवासिवासेष्वकालात् ' ॥३।२।२५॥ इति सप्तम्या अलुप् ॥ ३ ॥ शेषश्चात्र " शिष्ये छात्र " ॥

शैक्ष प्राथमकल्पिक ।

शिक्षाशीलमस्य शैक्ष १ ' अङ्स्याच्छत्रादेरञ्"॥६।४।६०॥ इत्यञ् । शिक्षायां भव इति वा ' शिक्षादेश्चाण् '॥६।३।१४८॥ इत्यण् ॥ १ ॥ प्रथमकल्प आचारम्भ प्रयोजनमस्य प्राथमकल्पिक प्रथमकल्पमधीत इति वा "पदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकात् ' ॥६।२।११९॥ इतीकण् ॥ २ ॥

सतीर्थ्यास्त्वेकगुरव

---

१ एकम् । २ एकम् ।

तरन्त्यनेन विद्याम्भोधिमिति तीर्थं गुरु, समाने तीर्थे वसन्ति सतीर्थ्या "सतीर्थ्ये"॥६।४।७८॥ इति यान्तो निपात्यते ॥ १ ॥ एक समानो गुरुरेषामे कगुरव ॥ २ ॥

[1]विवेक पृथगात्मता ॥७९॥

विवेचन हेयोपादेयज्ञान विवेक । अविवेकात् पृथक् भिन्न आत्मा पृथ गात्मा तद्भाव पृथगात्मता ॥ ७९ ॥

एकब्रह्मव्रताचारा मिथ सब्रह्मचारिण ।

तुल्यागमास्तुल्यव्रतास्तुल्याचाराश्च अन्योऽन्य समाने ब्रह्मण्यागमे गुरुकुले वा व्रत चरन्तीत्येवशीला सब्रह्मचारिण , समाना ब्रह्मचारिण इति वा "सब्रह्मचारी" ॥३।२।१५०॥ इति निपात्यते ॥

स्यात्पारम्पर्यमाम्नाय सम्प्रदायो गुरुक्रम ॥८०॥

परम्पराया गुरुशिष्यप्रशिष्यादिसन्तानरूपाया भाव पारम्पर्यम् ॥१॥ आम्ना यते आम्नाय ॥२॥ सम्यक् प्रदीयते सम्प्रदाय ॥३॥ गुरो क्रमो गुरुक्रम ॥४॥८०॥

व्रतादान परिव्रज्या तपस्या नियमस्थिति

व्रत शास्त्रविहितो नियमस्तस्यादान व्रतादानम् ॥१॥ परिव्रजन परिव्रज्या । प्रव्र ज्यापि । "आस्यटिव्रज्यज क्यप्"॥५।३।९७॥ इति क्यप् ॥ २ ॥ तपस करण तपस्या 'तपस क्यन्' ॥३।४।३६॥ इति क्यनि शसिप्रत्ययात्" ॥५।३।१०५॥ इति अ ॥३॥ नियमे व्रतेऽवस्थान नियमस्थिति ॥ ४ ॥

अहिंसासूनृतास्तेयब्रह्माकिञ्चनता [2]यमा: ॥८१॥

हिंसा प्राणव्यपरोपण तदभावोऽहिंसा ॥ १ ॥ सूनृत प्रिय सत्य च वच ॥२॥ स्तेयमदत्तादान तदभावोऽस्तेयम् ॥३॥ ब्रह्मेति ब्रह्मचर्यं मैथुनत्याग ॥४॥ अकिञ्चनता परिग्रहत्याग ॥५॥ यम्यते चित्तमेभिरिति यमा ॥ ८१ ॥

नि[3]यमा [4]शौचसन्तोषो स्वाध्यायतपसी अपि ।

देवताप्रणिधान च

नियम्यते चित्तमेभिर्नियमा । शुचेभाव कर्म वा शौच कायमनसो शुद्धि ॥१॥ सन्तोष सन्निहितसाधनादधिकस्याऽनुपादित्सा ॥२॥ स्वाध्यायमध्ययन स्वाध्यायो

---

१ एरम् । २ एरम् । ३ एरम् । ४ एरम् । ५ शौच सन्तोष इत्यपि पाठ ।

प्रवीणे तु शिक्षित ।
निष्णातो निपुणो दक्ष कर्म हस्त मुखा कृतात् ॥६॥
कुशलश्चतुरोऽभिज्ञविज्ञवैज्ञानिका पटु ।

प्रकर्षेण वीयते गम्यते प्रवीण "धृवीह्वा" ॥(उणा-१८३)॥ इति णक् तत्र ॥ १ ॥ शिक्षा सजाता अस्य शिक्षित, शिक्षते इति वा ॥ २ ॥ निष्णाति स्म निष्णात, निष्णातेर्मुख्यार्थं परित्यज्य निपुणे रूढ "निनद्या स्नाते कौशले" ॥२।३।२०॥ इति षत्वम् ॥ ३ ॥ नियत पुणति शोभनकर्मत्वाद् निपुण ॥ ४ ॥ दक्षते दक्ष ॥ ५ ॥ कृतशब्दात् परा कर्महस्तमुखा, तेन कृत कर्माऽनेन कृतकर्मा यौगिकत्वात् कृतकृत्य, कृतार्थ, कृती च कृतो वशाकृतो हस्तोऽनेन कृतहस्त, कृत संस्कृत मुखमस्य कृतमुख ॥ ६ ॥ ७ ॥ ८ ॥ ६ ॥ कुशान् लाति कुशल, ते हि व्युत्पत्तेरादातु शक्या कुशयति इति वा "तृपिवपि" ॥ (उणा-४६८)॥ इत्यलक् ॥१॥ चतते कर्म इति चतुर 'वाश्यसि' ॥ (उणा-४२३) ॥ इत्युर चत्वार पुमर्था सन्त्यस्येति वा अभ्रादित्वाद् अ ॥ १० ॥ अभिजानाति अभिज्ञ ॥ ११ ॥ विजानाति विज्ञ ॥ १२ ॥ विज्ञान प्रयोजनमस्य वैज्ञानिक ॥ १३ ॥ पटति दाक्ष्य पटु "भृमृतॄत्सरि" ॥ (उणा-७१६) ॥ इत्यु ॥१४॥

शेषश्चात्र—

अथ प्रवाणे क्षेत्रज्ञो नदीष्णो निष्ण इत्यपि ॥

छेको विदग्धे

छ्यति छिनत्ति मूर्खदुष्टचित्तानि इति छेक "निष्कतुरुष्क" ॥ (उणा-२६)॥ इति कान्तो निपात्यते ॥ १ ॥ विशेषेण मूर्खचित्त दहति विदग्ध तत्र ॥ २ ॥

शेषश्चात्र—

छेकालच्छेकिलौ छेके ॥ छइल्लो देश्याम् ॥

प्रौढस्तु प्रगल्भ प्रतिभान्वित ॥ ७ ॥

प्रोह्यते स्म प्रौढ ॥ १ ॥ प्रगल्भते प्रगल्भ ॥ २ ॥ प्रतिभा नवनवोल्लेखशालिनी प्रज्ञा तयाऽन्वित प्रतिभान्वित ॥ ३ ॥ ७ ॥

कुशाग्रीयमति सूक्ष्मदर्शी

कुशाग्रस्य तुल्या तीक्ष्णत्वात् कुशाग्रीया कुशाग्रादीय ' ॥७।१।११६॥ इति इय कुशाग्रीया मतिरस्य कुशाग्रीयमति ॥ १ ॥ सूक्ष्म पश्यतीत्येवंशील सूक्ष्मदर्शी ॥ २ ॥

तत्कालधी पुन ।

प्रत्युत्पन्नमति

तत्काल धीरस्य तत्कालधी ॥१॥ प्रसन्नमुत्पन्ना मतिरस्य प्रत्युत्पन्नमति ॥२॥

दूराद्य पश्येद् दीर्घदर्श्यसौ ॥ ८ ॥

दीर्घं पश्यतीत्येवशीलो दीर्घदर्शी दूरदर्शी ॥ १ ॥ ८ ॥

हृदयालु सहृन्यश्चिद्रूपोऽपि

प्रशस्त हृदय मनोऽस्त्यस्य हृदयालु 'हृपाहृदयादालु "॥७।२।४२॥ इत्यालु ॥ १ ॥ सह हृदयेन मनसा न तु वक्षसा वर्त्तते सहृदय ॥२॥ चिदिति विशिष्टे चैतन्ये वर्तते, चिद् रूपमस्य तन्मयत्वाद् चिद्रूप ॥ ३ ॥

अथ सस्कृते ।

व्युत्पन्नप्रहृतक्षुण्णा

शास्त्रादिना सस्क्रियते स्म सस्कृतस्तत्र ॥ १ ॥ व्युत्पद्यते स्म व्युत्पन्न ॥२॥ प्रहण्यते स्म प्रहृत ॥ ३ ॥ क्षुद्यते स्म क्षुण्ण ॥ ४ ॥

अन्तर्वाणिस्तु शास्त्रवित् ॥ ९ ॥

अन्तर्हृदयमध्ये न तु मुखे वाणिर्वागस्य अन्तर्वाणि शास्त्र वेत्ति न च तथा वक्तु शक्नोति शास्त्रवित् ॥ १ ॥ ९ ॥

वागीशो वाक्पतौ

वाचामीशो वागीश ॥ १ ॥ वाचा पतिर्वाक्पतिस्तत्र ॥ २ ॥

वाग्ग्मी वाचोयुक्तिपटु प्रवाक् ।

समुखो वावदूक

प्रशस्ता वागस्यास्ति वाग्ग्मी ग्मिन् ' ॥ ७।२।२५ ॥ इति ग्मिन् ॥ १ ॥ वाचो युक्तौ पटुर्वाचोयुक्तिपटु पश्यद्वाग्दिशो हरयुक्तिदण्डे ' ॥३।२।३२॥ इति षष्ठ्या अलुप् ॥ २ ॥ प्रकृष्टा वागस्य प्रवाक् ॥ ३ ॥ मुखशब्देन वचनमत्र लक्ष्यते तत सह मुखेन वचनेन वर्तते इति समुख ॥ ४ ॥ वावद्यते इत्येवशीलो वावदूक यजिजपिदशिवदादूक ॥ ५।२।४७ ॥ इत्यूक ॥ ५ ॥

अथ वदो वक्ता वदावद ॥ १० ॥

वदतीति वद ॥ १ ॥ वक्तीति वक्ता ॥ २ ॥ वदतीति वदावद "चराचर" ॥ ४।१।१३ ॥ इत्यादि द्वित्वद्वित्वो वा निपात्यते ॥ ३ ॥ १० ॥

स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।

जल्पनशीलो जल्पाक "यजभिक्षिलुण्टिजल्पिकुट्टाद्वाक" ॥५।२।७०॥ इति टाक ॥१॥ निन्दिता वागस्यास्ति वाचाल, वाचाट, "वाच आलाटौ"॥७।२।२४॥ इत्याल आटश्च ॥ २ ॥ ३ ॥ बहूनि सारतया गर्ह्या वागस्य बहुगर्ह्यवाक् ॥ ४ ॥

यद्वदोऽनुत्तरे

यदेव नि सरति तदेव वदति यद्वद ॥१॥ नास्त्युत्तरमस्य अनुत्तरस्तत्र ॥२॥

दुर्वाक् कद्वदे स्यात्

निन्दित वाक्यि दुर्वाक् गर्ह्यवादी ॥ १ ॥ कुत्सित वदति कद्वद "रथवदे" ॥३।२।१३१॥ इति को कदादेशस्तत्र ॥ २ ॥

अथाधर ॥ ११ ॥

हीनवादिनि

अवति गच्छति हीनत्वमधर "अवेर् च वा" ॥ (उणा–३९८)॥ इत्यर ॥ १ ॥ ११ ॥ हीन वदतीत्येवशीलो हीनवादी तत्र ॥ २ ॥

एडमूकोऽनेडमूकौ त्ववाक्श्रुतौ।

एडो बधिर मूकोऽवाक् एडश्चासौ मूकश्च एडमूक "कलमूकस्त्ववाक्श्रुति" इति हलायुध ॥ १ ॥ अनेडोऽपि अवक्रोऽपि मूक अनेडमूक, अन्धो ह्यनेड मूक स्यात् इति हलायुध अनेडमूकस्तु जड इति वैजयन्ती शठो ह्यनेड मूक स्यात्' इति भागुरि तदयमनेकार्थो द्रष्टव्य ॥२॥ न विद्यते वाक् श्रुतिश्चास्य अवाक्श्रुतिस्तत्र ॥ ३ ॥

रवण शब्दनस्तुल्यौ

रौतीत्येवशीलो रवण शब्दयतीत्येवशील शब्दन शब्दकर 'चलशब्दार्थादकर्मकात्' ॥५।२।४३॥ इत्यन ॥ १ ॥ २ ॥

कुवादकुचरौ समौ ॥ १२ ॥

कुत्सितो वादोऽस्य कुवाद ॥१॥ कुत्सित चरति कुचर कुचर कुटिलाशय इति कश्चित् ॥ २ ॥ १२ ॥

लोहलोऽस्फुटवाग्

लुह सौत्र लोहति मुह्यति लोहल मृदिकन्दि' ॥ (उणा–४६५) ॥ इत्यादिशब्दादल ॥ १ ॥ अस्फुटा अव्यक्ता वागस्य अस्फुटवाक् ॥ २ ॥

शेषश्चात्र–काहलोऽस्फुटभाषिणि ॥

मूकोऽवाक्

मूयते बद्ध्यते वागभावेन मूक " चिच्चिपुषि " ॥ ( उणा-२२ ) ॥ इति कित् क ॥ १ ॥ न विद्यते वागस्य अवाक् ॥ २ ॥

शेषश्चात्र-मूके जडकडौ ॥

## असौम्यस्वरोऽस्वर ।

न सौम्य स्वरोऽस्य असौम्यस्वर ॥ १ ॥ विपरीत स्वरोऽस्य अस्वर , नञ् विरुद्धे अनर्थवत् ॥ २ ॥

## वेदिता विदुरो विन्दु

वेत्तात्येवशीलो वेदिता ज्ञाता ॥ १ ॥ विदुर " वेत्तिच्छिदभिद क्नि् " ॥ ५।२।७५ ॥ इति घुर ॥ २ ॥ विन्दु " विन्द्विच्छू ' ॥ ५।२।३४ ॥ इति साधु ॥ ३ ॥

## वन्दारुस्त्वभिवादक ॥ १३ ॥

वन्दनशीलो वन्दारु " शृवन्देरारु " ॥ ५।२।३५ ॥ इत्यारु ॥ १ ॥ अभिवादयते अभिवादक ॥ २ ॥ १३ ॥

## आशंसुराशंसितरि

आशंसत इत्येवशील आशंसु सन्भिक्षा ' ॥५।२।३३॥ इति उ ॥१।२॥

## कद्वरस्त्वतिकुत्सित ।

कदल्याद्वृणोति कद्वर 'कृगृशृद्वृग्चति ॥ (उणा-४४१) ॥ इति वरट् कुत्सित वृणोति कद्वर इत्यन्ये अतिशयेन अत्यर्थं कुत्सितोऽतिकुत्सित ॥ १ ॥

## निराकरिष्णु क्षिप्नु स्यात्

निराकरणशीलो निराकरिष्णु भ्राज्यलङ्कृग्निराकृग् ' ॥५।२।२८॥ इति इष्णु ॥ १ ॥ क्षिपतीत्येवशील क्षिप्नु त्रसिगृधि '॥ ।२।३२॥ इति क्नु ॥२॥

## विकासी तु विकस्वर ॥ १४ ॥

विकसनशीलो विकासी विकस्वर ॥ १ ॥ २ ॥ १४ ॥

## दुर्मुखे मुखराबद्धमुखौ

मुखशब्देन वाग् लक्ष्यते दुष्ट मुख वागस्य दुर्मुख तत्र ॥ १ ॥ मुख सव स्मिन् वक्तव्येऽस्त्यस्य मुखर म्याादिभ्यो र ' ॥७।२।२६॥ इति र ॥२॥ अबद्धमनियन्त्रित निरर्थक वा मुखमस्य अबद्धमुख ॥ ३ ॥

## शक्ल प्रियवद ।

शक्नोति वक्तुं शक्लः "शामाश्याशम्यम्यमिभ्यो लः" ॥ (उणा-४६२) ॥ इति लः ॥१॥ प्रियं वदति प्रियवदः "प्रियवशाद् वदः" ॥५।१।१०७॥ इति खः ॥२॥

दानशीलः स वदान्यो वदन्योऽपि

स प्रियवदः दानशीलः सन् वदति प्रियं ददानो वदान्यः "वदिमहिभ्यां मान्यः" ॥ (उणा ३८१) ॥ इत्यान्यः, दानशीलप्रियवाचौ वदान्यौ पृथगिरेके। यद्भागुरिः —"शक्लो वदान्यः प्रियवाक् वदान्यो दानशीलकः" इति ॥ १ ॥ वदने साधुर्वदन्यः ॥ २ ॥

अथ बालिशः ॥ १५ ॥

मूढो मन्दो यथाजातो बालो मातृमुखो जडः ।

मूर्खोऽमेधोविवर्णाज्ञा वैधेयो मातृशासितः ॥ १६ ॥

देवानांप्रियजाल्मौ च

बलति प्राणति जनन्येति बालिशः 'बलेणिद् वा" ॥ (उणा ५३६) ॥ इति इशः ॥ १ ॥ १५ ॥ मुह्यति स्म मूढः ॥ २ ॥ मन्दोऽलस इव मन्दः ॥ ३ ॥ यथैव जातस्तथैव स्थितोऽसंस्कृतत्वाद् यथाजातः, यथोद्गतोऽपि ॥ ४ ॥ बाल इव बालः ॥ ५ ॥ मातैव मुखमस्य मातृमुखः ॥ ६ ॥ जलति न तीक्ष्णो भवति डल्योरैक्ये जडः ॥ ७ ॥ मुह्यति कार्ये मूर्खः "पूमुहो पुमूरौ च" ॥ (उणा ८६) ॥ इति खः ॥ ८ ॥ नास्ति मेधाऽस्य अमेधाः "मन्दात्पाच्च मेधायाः ॥ ७ । ३ । १३८ ॥ इत्यस् समासान्तः ॥९॥ विगतं वर्णनं श्लाघाऽस्य विवर्णः ॥१०॥ प्रश्नोत्तरे न जानात्यज्ञः ॥ ११ ॥ विधाया भाजनस्यापत्यमिव वैधेयः, विधेयात् स्वार्थे प्रज्ञाद्यण् वा ॥ १२ ॥ अज्ञत्वात् मात्रा शास्यते मातृशासितः ॥१३॥१६॥ देवानां प्रियः देवानांप्रियः देवानांप्रियः ॥३।२।३४॥ इति षष्ठ्या अलुप् ॥ १४ ॥ जलतीति जाल्मः 'रुक्मग्रीष्म ॥ (उणा ३४६) ॥ इति मान्तो निपात्यते 'जाल्मोऽसमीक्ष्यकारी स्यात्' इत्यमरः ॥१५॥

शेषश्चात्र—मूर्खे स्वनेडो नामवर्जितः ॥

दीर्घसूत्रश्चिरक्रियः ।

दीर्घेण चिरेण सूत्रयति दीर्घसूत्रः दीर्घेण सूत्रतीति वा ॥ १ ॥ चिरेण क्रियाऽस्य चिरक्रियः ॥ २ ॥

मन्दः क्रियासु कुण्ठः स्यात्

क्रियासु कर्मसु मन्दोऽलसः कुण्ठति कुण्ठः, कुणति शब्दायते न तु करोतीति वा 'पाविशिकुणिपृभ्यः कित्' ॥ (उणा-१६३) ॥ इति ठः ॥ १ ॥

क्रियावान् कर्मसूद्यत ॥ १७ ॥

क्रियाऽस्त्यस्य क्रियावान् नित्ययोगे मतु ॥ १ । १७ ॥

कर्मक्षमोऽलङ्कर्मीण

कर्मणि क्षम शक्त कर्म क्षम अल कर्मणे अलङ्कर्मीण "अपडक्षाशितङ्ग्वलङ्कर्मालपुरुषाद्यीन" ॥ ७।१।१०६ ॥ इतीन ॥ १ ॥

कर्मशूरस्तु कर्मठ ।

कर्मणि शूर कर्मशूर ॥ १ ॥ कर्मणि घटने कर्मठ "तत्र घटते कर्मणष्ठ" ॥ ७।१।१३७ ॥ इति ठ ॥ २ ॥

कर्मशील कार्म

कर्मशीलमस्य कर्मशील ॥ १ ॥ कार्म "अङ्स्थान्छत्रादेरञ्" ॥६।४।६०॥ इत्यञ् ॥ २ ॥

आय शूलिकस्तीक्ष्णकर्मकृत् ॥ १८ ॥

तीक्ष्ण उपायोऽय शूलमाम्यादय शूल तेन अन्वेष्टा आय शूलिक यो मृदुनोपायेनाऽन्वेष्टयानर्थांस्तीक्ष्णोपायेनान्विच्छति लाभमिक स एवमुच्यते "दाण्डाजिनिकाय शूलिकपार्श्वकम्" ॥ ७।१।१७१ ॥ इति निपात्यते ॥ १ ॥ १८ ॥

सिंहसहनन खड्ग

सिंहस्येव सहनन देहोऽस्त सिंहसहनन ॥ १ ॥ सुरूपमङ्गमस्य खड्ग ॥२॥

स्वतन्त्रो निरवग्रह ।

यथाकामी स्वरुचिश्च स्वच्छन्द स्वैर्यपावृत ॥ १९ ॥

स्व आत्मा तन्त्र प्रधानमस्य स्वतन्त्र ॥ १ ॥ अवग्रहान्नियन्त्रणात् निष्क्रान्तो निरवग्रह ॥ २ ॥ यथा कामयते यथाकामी ॥ ३ ॥ स्वा आत्मीया रुचिरस्य स्वरुचि ॥ ४ ॥ स्व आत्मीयश्छन्दोऽभिप्रायोऽस्य स्वच्छन्द ॥ ५ ॥ स्वयमारितु शीलमस्य स्वैरी स्वैरोऽस्यास्तीति वा "स्वैरस्वैयक्षौहिण्याम्" ॥ १।२।१५ ॥ इति ऐत्वम् ॥ ६ ॥ अपगत आवृत नियन्त्रणमस्य अपावृत ॥ ७ ॥ १९ ॥

यदृच्छा स्वैरिता स्वेच्छा

या या इच्छा यदृच्छा पृषोदरादित्वात् ॥१॥ स्वैरिणो भाव स्वैरिता ॥२॥ स्वस्येच्छा स्वेच्छा ॥ ३ ॥

नाथवान् निघ्नगृह्यकौ ।

तन्त्रायत्तवशाधीनच्छन्दवन्त परात् परे ॥ २० ॥

नाथो नियन्ताऽस्त्यस्य नाथवान् ॥ १ ॥ निह्यते निघ्न स्थादित्वात् के "हनो टो घ्न" ॥ २।१।११२॥ इति घ्नादेश ॥ २ ॥ गृह्यते गृह्य "पदास्वैरि बाह्यापक्ष्ये ग्रह" ॥५।१।४४॥ इति क्यप् स्वार्थे के गृह्यक ॥३॥ परशब्दात् परे तन्त्रादय तेन परस्य तन्त्र आयत्त परतन्त्र परस्यायत्त परायत्त, परस्य वश परवश, परस्याधान पराधान, परस्य च्छन्दोऽस्य परच्छन्द, परो नियन्ताऽस्त्यस्य परवान् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

शेषश्चात्र—परतन्त्रे वशायत्तावधीनोऽपि ।

लक्ष्मीवान् लक्ष्मण श्लील

लक्ष्मीरस्त्यस्य लक्ष्मीवान् लक्ष्मण "लक्ष्म्या अन" ॥ ७।२।३२ ॥ इत्यन ॥ १ ॥ २ ॥ श्रिय लाति श्लाल, श्रीरस्यास्तीति वा सिध्मादित्वाद् ल ऋफिडादित्वात् रस्य ल्त्वम्, श्रामान् इत्यपि ॥ ३ ॥

इभ्य आढ्यो धनीश्वर ।

ऋद्धे

इभमर्हति इभ्य दण्डादेय" ॥ ६।४।१७८ ॥ इति य ॥ १ ॥ अध्यायन्ति तामेति आढ्य, पृषोदरादित्वात् आढौक्न इति वा शिक्यास्याढ्य ॥ (उणा ३६४) ॥ इति यान्तो निपात्यते ॥ २ ॥ धनमस्यास्तीति धना अतिशायने इन् ॥ ३ ॥ इष्ट इत्येवशील इश्वर ॥ ४ ॥ ऋध्यति स्म ऋद्ध समृद्ध तन ॥ ५ ॥

विभूति सपत्तिर्लक्ष्मी श्रीऋद्धिसपद ॥ २१ ॥

विभ्वन विभूति ॥ १ ॥ सपदन सपत्ति ॥ २ ॥ लक्ष्यते लक्ष्मा ॥ ३ ॥ श्रयणशीला श्रा ॥ ४ ॥ अधन ऋद्धि ॥ ५ ॥ सपदन सपत् ॥ ६ ॥ २१ ॥

दरिद्रो दुर्विधो दु स्थो दुर्गतो नि स्वकीकटौ ।

अकिञ्चन

दरिद्राति दरिद्र ॥१॥ दुष्टा विधा प्रकारो भोजन वा अस्य दुर्विध ॥ २ ॥ दु खेन तिष्ठति दु स्थ ॥ ३ ॥ दु खन गच्छति दुगत ॥ ४ ॥ निगत स्वमस्य नि स्व ॥ ५ ॥ कन्ते काम्ट कपन्कीकादय ॥ (उणा १४४) ॥ इति साधु ॥ ६ ॥ नास्ति किञ्चनाऽस्य अकिञ्चन ॥ ७ ॥

शेषश्चात्र—अथ दुर्गते ।

क्षुद्रो दानश्च नाचश्च ॥

अधिपस्त्वीशो नेता परिवृढोऽधिभू ॥ २२ ॥
पतीन्द्रस्वामिनाथार्या प्रभुर्भर्तेश्वरो विभु ।
ईशितेनो नायकश्च

अधिपातीति अधिप ॥ १ ॥ इष्टे इश ॥ २ ॥ नयति नियुङ्क्ते नेता ॥३॥ परिवृहति परिवृहति वा परिवृढ "क्षुब्धविरिब्ध" ॥४।४।७०॥ इति साधु ॥४॥ अधि उपरि भवति अधिभू ॥ ५ ॥ २२ ॥ पाताति पति "पातेर्वा" ॥ (उणा ६५९) ॥ इति क्विदति ॥६॥ इन्दनाद् इन्द्र भीवृधि "॥ (उणा--३८७) ॥ इति र ॥ ७ ॥ स्वमस्यास्तीति स्वामी 'स्वाद् मिनीशे' ॥ ७।२।४९ ॥ इति मिन् दीर्घश्च ॥ ८ ॥ नाथति इष्टे नाथ ॥९॥ अर्यते सेव्यते अर्य 'स्वामिवैश्येऽर्य ॥ ५।१।३३ ॥ इति साधु ॥ १० ॥ प्रभवति प्रभु 'शासस्वयविप्राद् भुवो डु" ॥ ५।२।८४ ॥ इति डु ॥ ११ ॥ बिभर्ति पुष्णाति भर्ता ॥ १२ ॥ इशनशील ईश्वर ॥ १३ ॥ विभवति विभु ॥ १४ ॥ इष्टे इशिता ॥ १५ ॥ एति स्वामित्वमिन 'जाणुशा" ॥ (उणा २६१) ॥ इति नक् ॥ १६ ॥ नयति नायक ॥ १७ ॥

नियोज्य परिचारक ॥ २३ ॥
डिङ्गर किङ्करो भृत्यश्चेटो गोप्य पराचित ।
दास प्रेष्य परिस्कन्दो भुजिष्यपरिकर्मिणौ ॥ २४ ॥
परान्न परपिण्डाद परजात परैधित ।

नियोक्तु शक्यो नियोज्य ॥१॥ परिचरति परिचारक, प्रतिचरोऽपि॥२॥२३॥ डिम्यते क्षिप्यते डिङ्गर जठरकर" ॥ (उणा ४०३) ॥ इत्यादिशब्दात् निपात्यते ॥३॥ किं करोमीत्याज्ञा प्रतीक्षते किंकर किंयत्तद्बहोर ॥५।१।१०१॥ इति अ ॥ ४ ॥ भरणीयो भृत्य भृगोऽसंज्ञायाम् ॥ ५ । १ । ४५ ॥ इति क्यप् ॥ ५ ॥ चेटति चेट ॥ ६ ॥ गोपनीयो गोप्य ॥ ७ ॥ परैराचीयते वर्ध्यते पराचित ॥ ८ ॥ दासते सुख स्वामिनेऽचि दास ॥ ९ ॥ प्रेषणीय प्रेष्य ॥ १० ॥ परिस्कन्दते आक्रम्य नियुज्यते परिस्कन्द ॥ ११ ॥ भुङ्क्ते स्वाम्युच्छिष्ट भुजिष्य रुचिभुजिभ्या किष्य ' ॥ (उणा —३८४) ॥ इति किष्य ॥ १२ ॥ परित कर्मास्यास्ति परिकर्मी शिखादित्वादिन् ॥ १३ ॥ २४ ॥ परस्याऽन्नमस्य परान्न ॥ १४ ॥ परस्य पिण्डमत्ति परपिण्डाद ॥ १५ ॥ परेण जात परजात ॥ १६ ॥ परैरेध्यते वर्ध्यते परैधित ॥ १७ ॥ परान्नादयश्चत्वार पृथगेकार्था इत्यन्ये ॥

भृतके भृतिभुग् वैतनिक कर्मकरोऽपि च ॥ २५ ॥

भ्रियते स्म स्वार्थे भृतक तत्र ॥ १ ॥ भृतिवेतन भुङ्क्ते भृतिभुग् ॥ २ ॥

वेतनेन जीवति वैतनिकः "वेतनादेर्जीवति" ॥ ६ । ४ । १५ ॥ इतीकण् ॥ ३ ॥ कर्म करोति कर्मकरः "भृतौ कर्मणः" ॥ ५।१।१०४ ॥ इति टः ॥ ४ ॥ २५ ॥

स निर्भृतिः कर्मकारः

स भृतको निर्वेतनं कर्म कुर्वन् कर्मकारः ॥ १ ॥

भृतिः स्याद् निष्क्रयः पणः ।
कर्मण्या वेतनं मूल्यं निर्वेशो भरणं विधा ॥ २६ ॥
भर्मण्या भर्म भृत्या च

भ्रियतेऽनया भृतिः ॥ १ ॥ निष्क्रयणं निष्क्रयः ॥ २ ॥ पण्यते आभाष्यते पणः "पणेर्माने" ॥ ५ । ३ । ३२ ॥ इत्यल् ॥ ३ ॥ कर्मणि साधु कर्मण्या ॥ ४ ॥ वीयतेऽश्यते वेतनं 'वीपतिपटिभ्यस्तनः" ॥ ( उणा–२९२ ) ॥ इति तनः ॥ ५ ॥ मूलेन आनाम्यं मूल्यं 'हृद्यपद्य" ॥ ७ । १ । ११ ॥ इति यः ॥ ६ ॥ निर्विश्यते भुज्यते निर्वेशः ॥ ७ ॥ भ्रियतेऽनेन भरणम् ॥ ८ ॥ विधीयतेऽनया विधा ॥ ९ ॥ २६ ॥ भर्मणि साधुर्भर्मण्या ॥ १० ॥ भ्रियतेऽनेन भर्म 'मन्"॥ ( उणा– ९११ ) ॥ इति मन् ॥ ११ ॥ भ्रियतेऽनया भृत्या "भृगो नाम्नि' ॥ ५ । ३ । ९८ ॥ इति क्यप् ॥ १२ ॥

भोगस्तु गणिकाभृतिः ।

भुज्यते भोगः गणिकाया भृतिर्वेतनम् ॥ १ ॥

शेषश्चात्र– भाटिस्तु गणिकाभृतौ ॥

खलपूः स्याद् बहुकरः

खलं पुनाति खलपूः ॥ १ ॥ बहु करोति बहुकरः समार्जकः, बहुधार्यार्जक इत्यन्ये ॥ २ ॥

भारवाहस्तु भारिकः ॥ २७ ॥

भारं वहति भारवाहः ॥ १ ॥ भारोऽस्त्यस्य भारिकः ॥ २ ॥ २७ ॥

वार्तावहे वैवधिकः

वृत्तिर्जीविकाऽस्त्यस्या वार्ता अनामयम्, वार्ताया वहो वार्तावहः तत्र ॥ १ ॥ वीवधो भारः पर्याहारो वा तेन हरति वैवधिकः विवधवीवधिकावपि "विवधवीवधाद् वा" ॥ ६ । ४ । २५ ॥ इतीकण् ॥ २ ॥

भारे विवधवीवधौ ।

विवध्यते विवधः 'न जनवधः ॥ ४ । ३ । ५४ ॥ इति घञि वृद्धेरभावः, घञि उपसर्गस्य दार्घत्वे वीवधः ॥ २ ॥ ३ ॥

काच शिक्य तदालम्ब

कच्यते बध्यतेऽनेन काच ॥ १ ॥ शक्नोति वोढु शिक्यम् " शिक्यास्या ढ्य " ॥ (उणा-३६४) ॥ इति यान्तो निपात्यते। तस्य भारस्याऽऽलम्बन तदाल म्बन तदालम्बो यत्र रज्जुपञ्जरे वोढव्यमास्ते ॥ २ ॥

भारयष्टिर्विहङ्गिका ॥ २८ ॥

भारोद्वहनाथा चतुर्दण्डिका यष्टिर्भारयष्टि शिक्याधार, स्कन्धमाह्य लगुड इति द्रमिला विहङ्गप्रतिकृतिस्तम्भादिमयी विहङ्गिका या भित्त्यादौ लम्बमाना स्था प्यते प्रयाणके च सधार्यते। विहङ्गमस्येरे ॥ १ ॥ २८ ॥

शूरश्चारभटो वीरो विक्रान्तश्च

शूरयते शूर ॥ १ ॥ चारेण गमनेन भटति युद्धमाकाङ्क्षति चारभट ॥ २ ॥ अजति क्षिपति शत्रून् वीर "ऋज्यजि" ॥ ( उणा-३८८ ) ॥ इति रक् वारयत इति वा ॥ ३ ॥ विक्रामति उत्सहते स्म विक्रान्त ॥ ४ ॥

अथ कातर ।

दरितश्चकितो भीतो भीरुर्भीरुकभीलुका ॥ २९ ॥

कायति कातर 'अनिनाभ्या तर' ॥ (उणा-४३७) ॥ इति तर इषत्तरति वा कातर ॥१॥ दर सजातोऽस्य दरित ॥२॥चकति बिभेति स्म चकित ॥३॥बिभेति स्म भीत ॥ ४ ॥ बिभेतीत्येवशालो भीरु, भीरुक भीलुक ' भियो रुरुक्लु कम् ' ॥५।२।७६॥ इति साधव ॥५॥६॥७॥ अवारे कातर इत्यमर ॥२९॥

शेषश्चात्र—

त्रस्नुस्त्रस्तौ तु चकिते ॥

विहस्तव्याकुलौ व्यग्रे

विगतौ किङ्कर्तव्यतामूढत्वाद् हस्तावस्य विहस्त ॥ १ ॥ विशेषेणाकुलो व्याकुल ॥ २ ॥ विगतमग्रमस्य व्यग्रस्तत्र विशेषेण अगति वा ॥ ३ ॥

कान्दिशीको भयद्रुते ।

का दिश व्रजामि इत्याकुल कान्दिशीक, पृषोदरादित्वात्साधु, भयेन द्रुत पलायितो भयद्रुत तत्र ॥ १ ॥

उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥ ३० ॥

उत्पिञ्जयतीति उत्पिञ्जल ॥१॥ समुत्पिञ्जयति समुत्पिञ्ज ॥ २ ॥ पिञ्ज यति पिञ्जल भृशमत्यर्थमाकुले ॥ ३ ॥ ३० ॥

वेतनेन जीवति वैतनिक "वेतनादेर्जीवति" ॥ ६ । ४ । १५ ॥ इतीकण् ॥ ३ ॥ कर्म करोति कर्मकर "भृतौ कर्मण" ॥ ५।१।१०४ ॥ इति ट ॥ ४ ॥ २५ ॥

स निर्भृति कर्मकार

स भृतको निर्वेतन कर्म कुर्वन् कर्मकार ॥ १ ॥

भृति स्याद् निष्क्रय पण ।
कर्मण्या वेतन मूल्य निर्वेशो भरण विधा ॥ २६ ॥
भर्मण्या भर्म भृत्या च

भ्रियतेऽनया भृति ॥ १ ॥ निष्क्रयण निष्क्रय ॥ २ ॥ पण्यते आभाष्यते पण "पणेमाने" ॥ ५ । ३ । ३२ ॥ इत्यल् ॥ ३ ॥ कर्मणि साधु कर्मण्या ॥ ४ ॥ वीयतेऽयते वेनन 'वीपतिपटिभ्यस्तन" ॥ (उणा-२९२) ॥ इति तन ॥ ५ ॥ मूल्येन आनाम्य मूल्य 'हृद्यपद्य" ॥ ७ । १ । ११ ॥ इति य ॥ ६ ॥ निर्विश्यते भुज्यते निर्वेश ॥ ७ ॥ भ्रियतेऽनेन भरणम् ॥ ८ ॥ विधायते ऽनया विधा ॥ ९ ॥ २६ ॥ भर्मणि साधुभर्मण्या ॥ १० ॥ भ्रियतेऽनेन भर्म 'मन्"॥ (उणा- ९११) ॥ इति मन् ॥ ११ ॥ भ्रियतेऽनया भृत्या "भृगो नाम्नि' ॥ ५ । ३ । ९८ ॥ इति क्यप् ॥ १२ ॥

भोगस्तु गणिकाभृति ।

भुज्यते भोग गणिकाया भृतिर्वेतनम् ॥ १ ॥
शेषश्चात्र- भाटिस्तु गणिकाभृतौ ॥

खलपू स्याद् बहुकर

खल पुनाति खलपू ॥ १ ॥ बहु करोति बहुकर समार्जक बहुधान्यार्जक इत्यन्ये ॥ २ ॥

भारवाहस्तु भारिक ॥ २७ ॥

भार वहति भारवाह ॥ १ ॥ भारोऽस्त्यस्य भारिक ॥ २ ॥ २७ ॥

वार्तावहे वैवधिक

वृत्तिर्जीविकाऽस्त्यस्या वार्ता अन्नाद्यम्, वार्ताया वहो वार्तावह तत्र ॥ १ ॥ वीवधो भार पयाहारो वा तेन हरति वैवधिक विवधवीवधिकावपि, 'विवधवीवधाद् वा' ॥ ६ । ४ । २५ ॥ इतीकण् ॥ २ ॥

भारे विवधवीवधौ ।

विवध्यते विवध न जनवध ॥ ४ । ३ । ५४ ॥ इति घञि वृद्धेरभाव, घञि उपसर्गस्य दीर्घत्वे वीवध ॥ २ ॥ ३ ॥

इति साधु ॥ ६ ॥ अनुकम्पन अनुकम्पा ॥ ७ ॥ अनुक्रोशन्ति समदु खा भवन्त्य नेन अनुक्रोश ॥ ८ ॥

हिंस्रे शरारुघातुकौ ॥ ३३ ॥

हिंसनशीलो हिंस्र ' स्म्यजसहिंस " ॥ ५।२।७९ ॥ इति र, तत्र ॥ १ ॥ श्रृणातीत्येवशील शरारु ' शृवन्देरारु " ॥ ५।२।३५ ॥ इत्यारु ॥ २ ॥ हन्ता ति घातुक " शूकमगम " ॥५।२।४०॥ इत्युकण्॥ ३ ॥ ३३ ॥

व्यापादन विशरण प्रमय प्रमापण
निर्ग्रन्थन प्रमथन कदन निर्बर्हणम् ।
निस्तर्हण विशसन क्षणन परासन
प्रोज्जासन प्रशमन प्रतिघातन वध ॥ ३४ ॥
प्रवासनोद्वासनघातनिर्वा-
सनानि सञ्ज्ञपनिशुम्भहिंसा ।
निर्वापणालम्भनिसूदनानि
निर्यातनोन्मन्थसमापनानि ॥ ३५ ॥
अपासन वर्जनमारपिञ्जा-
निष्कारणक्राथविशारणानि ।

अत्र अहिंसाया अपि धातव उपसर्गवशाद् हिंसाया ज्ञेया, अन्तर्भावितण्यर्थानां सकर्मता व्यापादनमिति विआङ्पूर्वात् पदेर्णिच्यनट् ॥ १ ॥ शॄ हिंसायां विशरणम् ॥२॥ मीञ् हिंसायामस्ति प्रमय पुन्नपुंसकलिङ्ग कदन प्रमयोऽस्त्रियाम ' इत्यमरशेष ॥ ३ ॥ मीनातेरेव स्वार्थ णिचि ' मिमीमागोऽस्यत्वात्' ॥ ६। १८॥ इत्यात्वेऽनादि च प्रमापणम् ॥ ४ ॥ ग्रथुद् कौटिल्ये निग्र थनम् ॥ ५ ॥ मथे वि लोडने प्रमथनम् ॥ ६ ॥ कदै सौत्रस्य कदनम् ॥ ७ ॥ निपूर्वाद् बृहेर्बर्हेर्वा निब र्हणम् ॥ ८ ॥ तृहेर्हिसार्थस्य निष्पूर्वस्य स्तृहेर्वा निपूर्वस्य निस्तर्हणम् ॥ ९ ॥ शसु हिंसाया विशसनम् ॥ १० ॥ क्षणुग् हिंसाया क्षणनम् ॥ ११ ॥ परापूर्वस्याऽस्यते परासनम् ॥ १२ ॥ जसण् हिंसाया प्रोज्जासनम् ॥ १३ ॥ प्रशमे प्रशमनम् ॥१४॥ हन्ते स्वार्थणिजन्तस्य प्रतिघातनम् ॥ १५ ॥ हनन वध " हनो वा वध् च " ॥ ५।३।४६ ॥ इत्यल् ॥ १६ ॥ ३४ ॥ प्रवसत प्रयुक्ति प्रवासनम् एवमुद्वासनम् ॥ १७ ॥ १८ ॥ हनन घात ॥ १९ ॥ निवसन प्रयुक्तिर्निवासनम् ॥ २० ॥ सञ्ज्ञपन सञ्ज्ञप्ति ' सातिहेति " ॥ ५।३।९४ ॥ इति क्ति ॥२१॥ निशुम्भन नि शुम्भ ॥ २२ ॥ हिंसन हिंसा ॥ २३ ॥ पैं ओवै शोषणे निष्पूर्वस्य णिगि

महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः ।
महामना महात्मा च

महती इच्छा अस्य महेच्छस्तत्र ॥ १ ॥ उद्गच्छति उद्भटत्युद्भटः ॥ २ ॥ साधु भिरुदयते गम्यते उदारः ॥ ३ ॥ उत्कर्षेणादीयते गम्यते उदात्तः ॥ ४ ॥ उदायते स्म उदीर्णः ॥ ५ ॥ महानाशयोऽस्य महाशयः ॥ ६ ॥ महद् मनोऽस्य महामनाः ॥ ७ ॥ महान् आत्माऽस्य महात्मा ॥ ८ ॥

कृपणस्तु मितम्पचः ॥ ३१ ॥
कीनाशस्तद्धनः क्षुद्रकदर्यदृढमुष्टयः ।
किम्पचानः

कल्पते कृपणः "कृगृपृकृपि" ॥ (उणा-१८८) ॥ इति अणट् ॥ १ ॥ मितं पचति मितपचः "परिमाणार्थमितनखात् पचः" ॥ ५ । १ । १०९ ॥ इति खः ॥२॥३१॥ क्नाति दाप्यते तृष्णया कीनाशः "क्नेरीचातः" ॥ (उणा-५३४) ॥ इत्याशः ॥ ३ ॥ तदेव धनमस्य तद्धनः ॥ ४ ॥ क्षुद्यतेऽल्पत्वात् क्षुद्रः "ऋज्यजि" ॥ (उणा-३८८) ॥ इति रक् ॥ ५ ॥ कुत्सितोऽर्यः स्वामी कदर्यः ॥ ६ ॥ दृढा मुष्टिरस्य दृढमुष्टिः ॥ ७ ॥ किञ्चित् पचति किम्पचानः "मुमुचान" ॥ (उणा-२७८) ॥ इति बहुवचनादानान्तो निपात्यते ॥ ८ ॥

दयालुस्तु कृपालुः करुणापरः ॥ ३२ ॥
सूरतः

दयत इत्येवंशीलो दयालुः "शीङ्श्रद्धानिद्रा" ॥ ५ । २ । ३७ ॥ इत्यालुः ॥ १ ॥ कृपाऽस्त्यस्य कृपालुः "कृपाहृदयादालुः" ॥ ७ । २ । ४२ ॥ इत्यालुः ॥ २ ॥ करुणायां परः करुणापरः ॥३॥३२॥ सुष्ठु रमते कृपायां सूरतः "पुतपित्त" ॥ (उणा-२०४) ॥ इति तान्तो निपात्यते ॥ ४ ॥

अथ दया शूकः कारुण्यं करुणा घृणा ।
कृपाऽनुकम्पाऽनुक्रोशः

दयन्तेऽनया दया भिदादित्वादङ् ॥ १ ॥ शवति गच्छन्ति परदुःखप्रहाणेच्छामनेन शूकः पुक्लीबलिङ्गः "घुयुहिपितुशोर्दीर्घश्च" ॥ (उणा-२४) ॥ इति कः ॥ २ ॥ करुणस्य भावः कारुण्यम्, करुणैव वा भेषजादित्वात् स्वार्थे ट्यण् ॥३॥ किरति चित्तं करुणा "कृवृदॄ" ॥ (उणा-१९६) ॥ इत्युणः ॥ ४ ॥ घ्रियन्तेऽनया घृणा, घृण्यतेऽनयेति वा ॥ ५ ॥ कृपणं कृपा "मृगयेच्छा" ॥५।३।१०१॥

ति माधु ॥ ६ ॥ अनुकम्पन अनुकम्पा ॥ ७ ॥ अनुक्रोशन्ति गमद्गा भजन्त्य
न अनुक्रोश ॥ ८ ॥

हिंसे शरारुघातुकौ ॥ ३३ ॥

हिमनशीलो हिंस्र " स्म्यजसहिंस " ॥ ३।२।१६७ ॥ रति र, तत्र ॥ १ ॥
शृणातील्यशारु शरारु ' शृवन्दगरु " ॥ ३।२।१७३ ॥ इत्यारु ॥ २ ॥ हन्ती
ति घातुक ' लषपतपद ' ॥ ३।२।१५४ ॥ ल्युकञ् ॥ ३ ॥ ३३ ॥

व्यापादन विशरण प्रमय प्रमापण
निर्ग्रन्थन प्रमथन क्रदन निबर्हणम् ।
निस्तर्हण विशसन क्षणन परासन
प्रोज्जासन प्रशमन प्रतिघातन वध ॥ ३४ ॥
प्रवासनोद्वासनघातनिर्वा-
सनानि सज्ञप्तिनिशुम्भहिंसा ।
निर्वापणालम्भनिसूदनानि
निर्यातनोन्मन्थसमापनानि ॥ ३५ ॥
अपासन वर्जनमारपिञ्जा-
निष्कारणक्राथविशारणानि ।

अत्र अहिंसार्था अपि धातव उपसर्गवशाद् हिंसार्था ज्ञेया, अकर्मकास्तु
णिचा सकर्मका व्यापादनमिति विआङ्पूर्वात् पदेर्णिजन्तात् ॥ १ ॥ शृ हिंसायाम्
विशरणम् ॥ २ ॥ मङ्ग हिंसायामपि प्रमय पुंस्त्वावलिङ्ग कदन प्रमयाऽस्त्रियाम्'
इत्यमरशेष ॥ ३ ॥ मीनातेरेव स्वार्थे णिचि मिग्मीगोऽखलचलि' ॥४।२।८॥
इत्यात्वेऽनदि च प्रमापणम् ॥ ४ ॥ ग्रथुङ् कौटिल्ये निर्ग्रन्थनम् ॥ ५ ॥ मथे वि
लोडने प्रमथनम् ॥ ६ ॥ कदे सौत्रस्य कदनम् ॥ ७ ॥ निपूर्वाद् बृहेर्बर्हवा निब
र्हणम् ॥ ८ ॥ तृहेर्हिंसार्थस्य निष्पूर्वस्य स्तृहेर्वा निष्पूर्वस्य निस्तर्हणम् ॥ ९ ॥ शसू
हिंसायां विशसनम् ॥ १० ॥ क्षणुञ् हिंसायां क्षणनम् ॥ ११ ॥ परापूर्वस्याऽस्यते
परासनम् ॥ १२ ॥ जसण् हिंसायां प्रोज्जासनम् ॥ १३ ॥ प्रशमे प्रशमनम् ॥ १४ ॥
हन्ते स्वार्थणिजन्तस्य प्रतिघातनम् ॥ १५ ॥ हनन वध हनो वा वधू च '
॥ ५।३।४६ ॥ इत्यल् ॥ १६ ॥ ३४ ॥ प्रवसत प्रयुक्ति प्रवासनम् एवमुद्वासनम्
॥ १७ ॥ १८ ॥ हनन घात ॥ १९ ॥ निवसत प्रयुक्तिर्निवासनम् ॥ २० ॥
सज्ञपन सज्ञप्ति सातिहेति ॥ ५।३।९४ ॥ इति क्ति ॥ २१ ॥ निशुम्भन नि
शुम्भ ॥ २२ ॥ हिंसन हिंसा ॥ २३ ॥ वै ओवै शोषणे इत्यस्य निष्पूर्वस्य णिगि

निर्वापणम् ॥ २४ ॥ आलम्भनमालम्भ ॥ २५ ॥ षूदि क्षरणे निसूदनम् ॥२६॥ निष्पूर्वस्य यतणो णिचि निर्यातनम् ॥ २७ ॥ उन्मथ्नातेघञि उन्माथ ॥ २८ ॥ सपूर्वस्य आप्नोते समापनम् ॥ २९ ॥ ३५ ॥ अपादस्यतेरपासनम् ॥ ३० ॥ वज्यते वजनम् ॥ ३१ ॥ मृश् हिंसायां स्वार्थणिचि अलि च मार ॥ ३२ ॥ पिजुण् हिंसादौ अलि पिञ्ज ॥ ३३ ॥ वृश् हिंसायाम् स्वार्थणिचि निष्कारणम् ॥३४॥ क्षणुण् हिंसायां अचि क्षाय ॥ ३५ ॥ शृश् हिंसाया स्वार्थणिचि विशारणम् ॥३६॥

स्यु कर्तने कल्पनवर्धने च

छेदश्च

कृत्यते कर्तनम्, तन ॥१॥ कल्प्यते कल्पनम् ॥२॥ वध्यते वधनम् ॥ ३ ॥ छेदन छेद ॥ ४ ॥

घातोद्यत आततायी ॥ ३६ ॥

घातोद्यतो वधोद्युक्त सनद्ध सन् यो वधार्थमुद्यत स आतत, तादृश सन् एति वधार्थं धावत्याततायी, आतत पलायमान वा तयते आततायी, वध उपलक्षण यत्स्मृति —

'अग्निदो गरदश्चैव शस्त्रपाणिधनापह ।
क्षेत्रदारहरश्चैव षडेते आततायिन " ॥ १ ॥ ३६ ॥

स शैर्षच्छेदिक शीर्षच्छेद्यो यो वधमर्हति ।

शीर्षच्छेदमर्हति शैर्षच्छेदिक ' तमर्हति ' ॥ ६ । ४ । १७७ ॥ इतीकण् ॥ १ ॥ शीर्षच्छेद्य शीर्षच्छेदाद् यो वा ' ॥६।४।१८४॥ इति य ॥ २ ॥

प्रमीत उपसम्पन्न परेतप्रेतसस्थिता ॥ ३७ ॥

नामालेख्ययश शेषो व्यापन्नोपगतौ मृत ।

परासु

प्रमीयते स्म प्रमीत ॥ १ ॥ उपसपद्यते स्म उपसपन्न ॥ २ परैति लोकान्तरे परेत ॥ ३ ॥ प्रैति स्म प्रेत ॥ ४ ॥ सतिष्ठते स्म सस्थित ॥ ५ ॥ ३७ ॥ नामालेख्ययश शब्देभ्य पर शेष तेन नामशेष आलेख्यशेष, यश शेष नामैव शेषमस्येत्यादि कृत्वा ॥ ६ ॥ ७ ॥ ८ ॥ व्यापद्यते स्म व्यापन्न ॥ ९ ॥ उपगच्छति स्म उपगत ॥ १० ॥ म्रियते स्म मृत ॥ ११ ॥ परागता असव प्राणा अस्य परासु ॥ १२ ॥

तदहे दान तदर्थमौर्ध्वदेहिकम् ॥ ३८ ॥

तस्य मृतस्य अहनि दिवसे, तमुद्दिश्य दान पिण्डोदकादि, ऊर्ध्वं देहाद् भवमौ-

प्रदक्षिणम्, अप्यामादित्वादिरण एकदेशविकृतत्वाद्दक्षिणम्, अनुग्गतनिपादे पात्मताप्रयणे तु उभयपदवृद्धा आप्रदक्षिणमपि ॥ १ ॥ ३८ ॥

मृतस्नानमपस्नान

मृते स्नान मृतस्नानम्, अपकृष्ट स्नानमपस्नानम् ॥ १ ॥

निवाप पितृतर्पणम् ।

नितरामुप्यते न्यायते निवाप, पितृणा तर्पणम् पितृतर्पणम् ॥ १ ॥

चितिचित्याचितास्तुल्या

चायते चिति ॥ १ ॥ चितैव चित्या भतादित्वाद् य ॥२॥ चीयते चिता ॥ ३ ॥ एते प्रेतदाहार्थे अग्न्याधाने वर्तन्ते ॥

ऋजुस्तु प्राञ्जलोऽञ्जस ॥ ३९ ॥

अर्ज्यते ऋजु "अर्जेऋज् च" ॥ ( उणा ७२२ ) ॥ इति उ ॥ १ ॥ प्राञ्चल्यति अञ्जलिं प्रबध्नाति प्राञ्जल प्राज्यते अभिगम्यते इति वा ॥ २ ॥ अञ्जोऽस्त्यस्य अञ्जस ॥ ३ ॥ ३९ ॥

दक्षिणे सरलोदारौ

दक्षते दक्षिण "द्रुहग्रहिदक्षिभ्य इण" ॥ ( उणा-१९४ ) ॥ इति इण तत्र ॥ १ ॥ सरति सरल मृदिकन्दि" ॥ ( उणा-४६५ ) इत्यल ॥ २ ॥ उदयत उदार ॥ ३ ॥

शठस्तु निकृतोऽनृजु ।

शठ कैतवे च शठति शठ शाम्यतीति वा शमेठश्च वा" ॥ ( उणा-१६५ ) ॥ इति ठ एकदेशविकृतत्वात् शण्ठोऽपि ॥ १ ॥ निकृणोति हिनस्ति निकृत ॥ २ ॥ न ऋजु अनृजु ॥ ३ ॥

क्रूरे नृशंसनिस्त्रिंशपापा

कृन्ततीति क्रूर कृते क्रूश्च्छ्रौ च ॥ ( उणा-३९५ ) ॥ इति र तत्र ॥ १ ॥ नॄन् शंसति हिनस्ति नृशंस ॥ २ ॥ निस्त्रिंश इव घातुकत्वाद् निस्त्रिंश ॥ ३ ॥ पापमस्यास्ति पाप ॥ ४ ॥

धूर्तस्तु वञ्चक ॥ ४० ॥

व्यसक कुहको दाण्डाजिनिको मायिजालिकौ ।

धूर्वति हिनस्ति धूर्त ' शारी ॥ ( उणा-२०१ ) इति त कित् ॥ १॥

गमयते यगक ॥ २ ॥ ४० ॥ व्यगयति न्छल्यति व्यगक , विगतावर्मा यस्य वगा , तत्तुल्या वा ॥ ३ ॥ कुहयत विस्मापयते कुहक , कुहकामन्द्रजाल वा य स्यास्ति ॥ ४ ॥ दम्भ्य अजिन न दम्भापलम्भणत्वाद् दाण्डाजिन दम्भ , ते अन्यथा "दाण्डाजिनिका" ॥ ७।१।१७१ ॥ इत्यादिना निपात्यते ॥ ५ ॥ मा गाऽस्ति अस्य मायी, मायादिरवात् इन्, मायाविमायिकावपि ॥ ६ ॥ जालन चरति जालिक ॥ ७ ॥

माया तु शठता शाठ्य कुसृतिर्निकृतिश्च सा॥ ४१ ॥

माति अनया माया 'स्याछामासा" ॥ (उणा ३५७) इति य ॥ १ ॥ शठस्य भाव शठता शाठ्यम् ॥२॥३॥ कुत्सिता सृतिर्हिसार्थ कुसृति ॥ ४ ॥ दृ कृत्य कृति निकृति ॥ ५ ॥ ४१ ॥

कपट कैतव दम्भ कूट छद्मोपधिश्छलम् ।

व्यपदेशो मिष लक्ष निभ व्याज

कम्पयत्यनेन कपट पुल्लीबलिङ्ग "कपटकीकगादय" ॥ (उणा १४४) ॥ इति साधु के मूर्ध्नि पटमिवाच्छादकमिति वा ॥ १ ॥ कितवस्य कम कैतव युवा दित्वादण् ॥ २ ॥ दम्भन दम्भ ॥ ३ ॥ कूटयति दहति अनेन कूट पुल्ली बलिङ्ग ॥ ४ ॥ छाद्यते रूपमनेन छद्म 'छदेरिस्मन्त्रट्कौ' ॥ ४।२।३३ ॥ इति मनि ह्रस्व ॥ ५ ॥ उपधीयते स्फटिकस्येव सिन्दूरमुपधि उपधा अपि ॥ ६ ॥ छ्यति छिनत्त्यनेन छलम् छोडग् गादिर्वा' ॥ (उणा ४७१) ॥ इति किदल ॥ ७ ॥ व्यपदिश्यते व्यपदेशोऽनद्रूपस्य ताद्रूप्यम् ॥ ८ ॥ क्रीडार्थ वञ्चनेन यद् मिषति मिषम् ॥ ९ ॥ म इव लक्ष्यतेऽनेन लक्ष पुक्लीबलिङ्ग ॥ १० ॥ नितरा तदिव भाति निभम् ॥ ११ ॥ व्यजन्ति विक्षिपन्त्यनेन व्याज स्वरूपाच्छादनम्, यल्लक्ष्यम् ध्यानव्याजमुपेत्य चेतयसि किम्' ॥ १२ ॥ मायादय कपटादयश्च एकार्था इत्येके कपटादयो व्यपदेशादयश्च भिन्नार्था इत्यमर ॥

अथ कुक्कुटि ॥ ४२ ॥

कुहना दम्भचर्या च

कुक्कुर इव आचरति कुक्कुटति दम्भेन निभृत चरति कुक्कुटन कुक्कुटि 'स्वरेभ्य इ" ॥ (उणा ६०६) ॥१॥४२॥ कुहयतेऽनया कुहना दम्भेन परविस्मा पनार्थ मिथ्याकल्पना ॥ २ ॥ दम्भन चरण समजानेपद् ॥ ५।३।९९ ॥ इति क्यप् ॥ ३ ॥

वञ्चन तु प्रतारणम् ।

व्यलीकमतिसन्धान

वञ्च्यते वञ्चनम् ॥ १ ॥ प्रतायते प्रतारणम् ॥ २ ॥ विशिष्टमलीकमत्र व्यलीकम् ॥ ३ ॥ अति सधीयतेऽतिसंधानम् ॥ ४ ॥

साधौ सभ्यार्यसज्जना ॥ ४३ ॥

साधयति कार्याणीति साधु "कृवापाजि" ॥ ( उणा-१ ) ॥ इति उण्, तत्र ॥ १ ॥ सभाया साधु सभ्य ॥ २ ॥ अर्यतेऽभिगम्यते आर्य ॥ ३ ॥ सत् शोभन जनयति सज्जन, सश्चासौ जनश्चेति वा सज्जन ॥ ४ ॥ ४३ ॥

दोषैकदृक् पुरोभागी

दोषे एव एकस्मिन् दृग् ज्ञान यस्य स दोषैकदृक् । यत्काल -दोषैकग्राहि हृदय पुरोभागीति कथ्यते ॥ १ ॥ पुरोऽग्र भपवद् भजतालेवशाल पुरोभागी "युजभुजभज "॥ ५ । २ । ५० ॥ इति घिनण् ॥ २ ॥

कर्णेजपस्तु दुर्जन ।

पिशुन सूचको नीचो द्विजिह्वो मत्सरी खल ॥ ४४ ॥

कर्णे जपति सूचयति कर्णेजप 'शोकापनुदतुन्दपरिमृज '॥५।१।१४३॥ इति के निपात्यते ॥ १ ॥ दुष्टो जनो दुष्ट जनयति वा दुर्जन ॥ २ ॥ पिंशति एक देशेन सूचयति पिशुन पिशिमिथिक्षुधिभ्य कित् ॥ ( उणा २९० ) ॥ इत्युन, पिशुनयतीति वा अपिशुनति वा पृषोदरादित्वात्, अपिंश्यति खण्ड यतीति भोज ॥ ३ ॥ सूचयतीति सूचक ॥ ४ ॥ निकृष्टमञ्चति नीच 'न्युद्भ्या मञ्चे " ॥ ( उणा १००३ ) ॥ इति के टावद्भावे च 'अच्च् प्रागदीर्घश्च" ॥ २ । १ । १०४ ॥ इति साधु ॥ ५ ॥ द्वे जिह्वे वचने अस्य द्विजिह्व ॥ ६ ॥ मत्सरोऽस्त्यस्य मत्सरी ॥ ७ ॥ खलति साधुहृदय खल पुल्लिङ्ग आश्रयलिङ्ग इत्यन्ये "मृजिखन्याहनिभ्यो टित्" ॥ ( उणा ४७२ )॥ इत्यल, खलति सञ्चिनोति पापम्, खलति गुणेभ्य इति वा ख शून्य लातीति वा ॥ ८ ॥

शेषश्चात्र—अथ क्षुद्रप्रखलौ खले ॥ ४४ ॥

व्यसनार्तस्तूपरक्त

व्यसति श्रेयोमार्गाद् व्यसन तेन ऋत व्यसनार्त "ऋते तृतीयास मासे " ॥ १ । २ । ८ ॥ इत्यार् ॥ १ ॥ उपरज्यते स्म उपरक्त ॥ २ ॥

चोरस्तु प्रतिरोधक ।

दस्यु पाटच्चर स्तेनस्तस्कर पारिपन्थिक ॥ ४५ ॥

परिमोषिपरास्कन्द्यैकागारिकमलिम्लुचा ।

चोरयति चोर प्रज्ञायाणि चौरोऽपि ॥ १ ॥ प्रतिरुणद्धि प्रतिरोधक ॥ २ ॥

दसति उपक्षणोति दस्यु "यजिशुभिदहिदसि" ॥ ( उणा ८०१ ) ॥ इति यु ॥ ३ ॥ पाटयश्चरति पाटच्चर, पृषोदरादित्वात्, पटच्चरे जीर्णवस्त्रे भवो वा पाटच्चर, पटचोर इत्येके ॥ ४ ॥ स्तेनयति स्तेन पुल्लीबलिङ्ग ॥ ५ ॥ तत् करोतीति तस्कर, वर्चस्कादित्वात् साधु ॥ ६ ॥ परिपन्थं तिष्ठति हन्ति वा पारिपन्थिक "परिपन्थात् तिष्ठति च" ॥६।४।३२॥ इति इकण् ॥७॥४५॥ परिमुष्णातीत्येव शील परिमोषी ॥ ८ ॥ परानास्कन्दति परास्कन्दी ॥ ९ ॥ एकमसहायमगार प्रयोजनमस्य ऐकागारिक "एकागाराच्चौरे" ॥ ६।४।११८ ॥ इति इकण् ॥१०॥ मलिन म्लोचति मलिम्लुच ॥ ११ ॥

शेषश्चात्र—चौरे तु चोरडो रात्रिचर ॥

य पश्यतो हरेदर्थं स चौर पश्यतोहर ॥ ४६ ॥

"पश्यद्वाग्दिशो हरयुक्तिदण्डे" ॥३।२।३२॥ इति षष्ठ्या अलुप् ॥१॥४६॥

चौर्यं तु चौरिका स्तेय

चौरस्य भाव कर्म वा चौर्यम्, राजादित्वात् ट्यण् ॥ १ ॥ चोरायकाञि चौरिका स्त्रीक्लीबलिङ्ग ॥ २ ॥ स्तेनस्य भाव स्तेय "स्तेनाद् नलुक् च" ॥७।१।६४॥ इति य, राजादित्वात् ट्यणि स्तैन्यमपि ॥ ३ ॥

लोप्त्र त्वपहृत धनम् ।

लुप्यते लोप्त्र चौर्यधन "हुयामा" ॥ (उणा–४५१) ॥ इति त्र ॥१॥

यद्भविष्यो दैवपर

यद् भविष्यति तद् भवत्विस्येवमाचष्टे यद्भविष्य ॥ १ ॥ दैवपरो दैववादी दैवप्रमाणक ॥ २ ॥

अथाऽऽलस्य शीतकोऽलस ॥ ४७ ॥

मन्दस्तुन्दपरिमृजोऽनुष्ण

आलस्यमस्त्यस्य आलस्य, अभ्रादित्वाद ॥१॥ शीत मन्द करोतीति शीतक "शीताच्च कारिणि" ॥७।१।१८६॥ इति क ॥ २ ॥ न लसत्यलस, अलताति वा 'तप्यणि' ॥ (उणा ५६९) ॥ इत्यस ॥३॥४७॥ मन्दते स्वपितीव मन्द, अत एव मदि जाड्ये इति चान्द्रो धातु, मन्यते वा 'शशापिमनि" ॥ ( उणा–२३७ ) ॥ इति द ॥ ४ ॥ तुन्द परिमार्ष्टि तुन्दपरिमृज "शोकापनुदतुन्दपरिमृज" ॥ ५।१।१४३ ॥ इति क ॥ ५ ॥ न उष्ण अनुष्ण ॥ ६ ॥

दक्षस्तु पेशल ।

पटूष्णोष्णकसूत्थानचतुराश्च

दक्षते शाघ्र करोति दक्ष ॥ १ ॥ पिंशत्येकदेशेन सर्वं करोति पेशल "मृदिकन्दि" ॥ ( उणा ४६५ ) इत्यल ॥ २ ॥ पटति पटु ॥ ३ ॥ ओषाते दहतीति उष्ण "धृवीह्वा" ॥ (उणा १८३ )॥ इति णक् ॥ ४ ॥ उष्ण क्षिप्र करोति इत्युष्णक "शीताच कारिणि"॥७।१।१८६॥ इति क ॥ ५ ॥ सुष्ठु उत्थानमुद्योगोऽस्य सूत्थान ॥ ६ ॥ चतते कम चतुर ॥ ७ ॥

अथ तत्पर ॥ ४८ ॥

आसक्त प्रवण प्रह्व प्रसितश्च परायण ।

तत्परमस्य तत्परस्तन्निष्ठ ॥१॥४८॥ आसजति स्म आसक्त ॥ २ ॥ प्रकर्षेण वनति सभजते प्रवण ॥ ३ ॥ प्रह्वयते कार्ये स्पधते प्रह्व "उपसगादातो डोऽस्य" ॥ ५।१।५६ ॥ इति ड ॥ ४ ॥ प्रसिनोति स्म प्रसित ॥ ५ ॥ पर कार्यं पारमयते परायण ॥ ६ ॥

दातोदार

ददाति दाता ॥ १ ॥ उदर्यते उदार ॥ २ ॥

स्थूललक्षदानशौण्डौ बहुप्रदे ॥ ४९ ॥

स्थूल लक्षयति आलोचयति ददाति इति यावत् स्थूललक्ष ॥ १ ॥ दाने प्रसक्त शौण्ड इव दानशौण्ड ॥ २ ॥ बहु प्रदत्ते बहुप्रद, तत्र ॥ ३ ॥ ४९ ॥

दानमुत्सर्जन त्याग प्रदेशनविसर्जने ।

विहायित वितरण स्पर्शन प्रतिपादनम् ॥ ५० ॥

विश्राणन निर्वपणमपवर्जनमहति ।

दीयते दानम् ॥ १ ॥ उत्सृज्यते उत्सजनम् ॥ ॥ २ ॥ त्यजन त्याग ॥ ३ ॥ प्रदिश्यते प्रदेशनम्, प्रादेशनमपि ॥ ४ ॥ विसृज्यते विसजनम् ॥ ५ ॥ हिनोतेर्ण्यन्तस्य क्ते विहायितम् ॥ ६ ॥ वितीयते वितरणम् ॥ ७ ॥ स्पृश्यते स्पशन दानमुपचारात्, पुच्छादौ गवादिक स्पृष्ट्वा हि दायते ॥ ८ ॥ प्रतिपाद्यते प्रतिपादनम् ॥९॥५०॥ विश्राण्यते विश्राणनम् ॥१०॥ निरुप्यते निवपणम् निवापणमपि ॥ ११ ॥ अपवृज्यतेऽपवजनम् ॥१२॥ हन्यते दौगत्यमनया अहति स्त्रीलिङ्ग हन्तेरह च ॥ ( उणा ६१४ ) ॥ इत्यति, स्वत, उपसगवशाच्चैते दानाथा ॥ १३ ॥

अर्थ्यव्ययज्ञ सुकल

अथव्यय जानाति अथव्ययज्ञो दाता भोक्ता च, शोभना कलाऽस्य सुकल ॥ १ ॥

याचकस्तु वनीपकः ॥ ५१ ॥
मार्गणोऽर्थी याचनकस्तर्कुकः

याचते याचकः ॥ १ ॥ वनुते याचते वनीपकः "कीचकपेचक" ॥ (उणा ३३) ॥ इत्यादिशब्दादकान्तो निपात्यते ॥२॥५१॥ मार्गति मार्गणः ॥ ३ ॥ अर्थनशीलोऽर्थी, अर्थोऽस्यास्तीति वा "अर्थार्थान्ताद्भावात्" ॥७।२।८॥ इतीन् ॥ ४ ॥ याचते याचनः स्वार्थे के याचनकः ॥ ५ ॥ चततेतर्कुकः 'कञ्चुकांशुक" ॥(उणा-५७) ॥ इत्युकान्तो निपात्यते ॥ ६ ॥

अथार्थनैषणा ।
अर्दना प्रणयो याच्ञा याचनाध्येषणा सनिः ॥ ५२ ॥

अर्थनमर्थना ॥ १ ॥ एषणमेषणा "इषोऽनिच्छायाम्" ॥ ५।३।११२ ॥ इत्यनः ॥ २ ॥ अर्दनमर्दना ॥ ३ ॥ प्रणयनं प्रणयः ॥ ४ ॥ याचनं याच्ञा मृगयेच्छयाच्ञा' ॥५।३।१०१॥ इति साधु ॥ ५ ॥ याचेः स्वार्थण्यन्तस्याऽने याचना ॥ ६ ॥ अध्येषणमध्येषणा "पर्येषेर्वा" ॥ ५।३।११३ ॥ इत्यनः ॥ ७ ॥ सन्यते सनिः पदिपठि" ॥ (उणा ६०७) ॥ इति इः, स्त्रीलिङ्गोऽयं पुंस्यपि वैजयन्त्यां यदाह— भिक्षा च सनिरस्त्री स्यात्' इति । 'सनिस्त्वध्येषणा' इति गुवादे क्वचिदर्थे प्रार्थनया नियोजनमित्यमरः पृथगाह ॥ ८ ॥ ५२ ॥

शेषश्चात्र–

याच्ञा तु भिक्षणा । अभिशस्तिर्मार्गणा च ॥

उत्पतिष्णुस्तूत्पतिता

उत्पतति ऊर्ध्वं गच्छतीत्येवंशीलः उत्पतिष्णुः उदः पचिपतिपदिमदे" ॥ ५।२।२९ ॥ इतिष्णुः ॥ १ ॥ २ ॥

अलङ्करिष्णुस्तु मण्डनः ।

अलङ्करोतीत्येवंशीलोऽलङ्करिष्णुः भ्राज्यलङ्कृग् ॥५।२।२८॥ इतीष्णुः ॥१॥ मण्डयति तच्छीलो मण्डनः ' भूषाक्रोधार्थ ॥५।२।४२॥ इत्यनः ॥ २ ॥

भविष्णुर्भविता भूष्णुः

भवतीत्येवंशीलो भविष्णुः इष्णुः ॥ १ ॥ भवतीति भविता ॥ २ ॥ भवतीत्येवंशीलो भूष्णुः भूजेः ष्णुक् ॥५।२।३०॥ इति ष्णुक् ॥ ३ ॥

समौ वर्तिष्णुवर्तनौ ॥ ५३ ॥

इष्णुः ॥ १ ॥ इङ्गित ॥ ५।२।४४ ॥ इत्यनश्च ॥ २ ॥ ५३ ॥

विसृत्वरो विसृमरः प्रसारी च विसारिणि ।

विसरतात्येवशालो विसृत्वर "सृनिण्" ॥ ५।२।७७ ॥ इति क्विन् ट्वरप् ॥१॥ विस्मर "सृघस्यद "॥५।२।७३॥ इति मरक् ॥ २ ॥ प्रसारा 'विपरि प्रात् सर्ते" ॥ ५।२।५५ ॥ इति घिनण् तत्र ॥ ३ ॥ ४ ॥

लज्जाशीलोऽपत्रपिष्णु

लज्जाशालमस्य लज्जाशाल लज्जालु ॥ १ ॥ अपत्रपते अपत्रपिष्णु, इष्णु ॥ २ ॥

सहिष्णु क्षमिता क्षमी ॥ ५४ ॥

तितिक्षु सहन क्षन्ता

सहे शीलाद्यर्थे इष्णौ सहिष्णु ॥ १ ॥ क्षमेस्तृनीटि च क्षमिता ॥ २ ॥ "शमष्टकाद" ॥५।२।४९॥ इति घिनणि क्षमी ॥ ३ ॥ ५४ ॥ तिजे "गुप्तिज" ॥३।४।५॥ इति सनि "सन्भिक्षा" ॥ ५।२।३३ ॥ इत्युप्रत्यये च तितिक्षु ॥४॥ सहेरने सहन ॥ ५ ॥ क्षमेरौदित्त्वाद् वेट्त्वे क्षन्ता ॥ ६ ॥

तितिक्षा सहन क्षमा ।

तितिक्षण तितिक्षा ॥ १ ॥ सह्यते सहनम् ॥ २ ॥ क्षमण क्षमा "षितो ऽङ्" ॥ ५।३।१०७ ॥ इत्यङ् क्षान्तिरित्यपि ॥ ३ ॥

ईर्ष्यालु कुहन

ईर्ष्यति ईर्ष्यालु 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलु' ॥ (उणा-८२२) ॥ इत्यालु ॥ १ ॥ कुहयते विस्मापयते कुहन ॥ २ ॥

अक्षान्तिरीर्ष्या

ईर्ष्यणमीर्ष्या भायादे परदर्शनासहने रूढा । कश्चित्तु परोत्कर्षासहन मात्स र्यमीर्ष्यां मन्यते यथा 'य ईर्ष्युः परवित्तेषु' इति ॥ १ ॥ २ ॥

क्रोधी तु रोषण ॥ ५५ ॥

अमर्षण क्रोधनश्च

क्रुध्यति क्रोधी ॥ १ ॥ रुष्यतीत्येवशीलो रोषण ॥ २ ॥ ५५ ॥ न मृष्यति अमर्षण ॥ ३ ॥ क्रुध्यति क्रोधन 'भूषाक्रोधार्थ' ॥ ५।२।४२ ॥ इत्यन कोपनोऽपि ॥ ४ ॥

चण्डस्त्वत्यन्तकोपन ।

चडुङ् कोपे चण्डते चण्ड चणति शब्दायते वा "पञ्चमाड्" ॥ (उणा-१६८) ॥ इति ड ॥ १ ॥

बुभुक्षित स्यात् क्षुधितो जिघत्सुरशनायित ॥ ५६ ॥

बुभुक्षा सजाताऽस्य बुभुक्षित, तारकादित्वादित ॥ १ ॥ क्षुध्यति क्षुधित, क्षुत् सजाताऽस्य वा ॥ २ ॥ अत्तुमिच्छु जिघत्सु ॥ ३ ॥ अशनमिच्छति आत्मन इति "अमाव्ययात्" ॥३।४।२३॥ इति क्यनि "क्षुत्तृड्गर्ध" ॥४।३।११३॥ इत्यात्वम्, तत क्तेऽशनायित ॥ ४ ॥ ॥ ५६ ॥

बुभुक्षायामशनाया जिघत्सा रोचको रुचि ।

भोक्तुमिच्छा बुभुक्षा, तस्याम् ॥ १ ॥ अशनेच्छा अशनाया ॥ २ ॥ अत्तुमिच्छा जिघत्सा "घस्लृ सनद्यतनी" ॥ ४।४।१७ ॥ इति सन्यदेर्घसादेश ॥३॥ रोचनम्, रोचतेऽस्मिन्निति वा रोचक पुल्लीवलिङ्ग "नाम्नि पुसि च" ॥५।३।१२१॥ इति णक ॥ ४ ॥ एव रुचि, स्त्रीलिङ्ग "नाम्युपान्त्य" ॥ (उणा-६०९) ॥ इति कि ॥ ५ ॥

शेषश्चात्र-बुभुक्षायां क्षुधाक्षुधौ ॥

पिपासुस्तृषितस्तृष्णक्

पातुमिच्छु पिपासु, पिपासितोऽपि ॥ १ ॥ तृष्यति तृषित ञ्यनुबन्धत्वात् सति क्त तृट् सजाताऽस्य वा तर्षितोऽपि ॥ २ ॥ तृष्यतीत्येवशील तृष्णक् "तृषि धृषि" ॥ ५।२।८० ॥ इति नजिङ् ॥ ३ ॥

तृष्णा तर्षोऽपलासिका ॥ ५७ ॥

पिपासा तृट् तृषोदन्या धीति पाने

तर्षण तृष्णा ' मृगयेच्छा " ॥ ५ । ३ । १०१ ॥ इति नङ् ॥१॥ घञि तर्ष ॥ २ ॥ अपकृष्ट लसत्यनया अपलासिका "नाम्नि पुसि च" ॥५।३।१२१॥ इति णक ॥ ३ ॥ ५७ ॥ पातुमिच्छा पिपासा ॥ ४ ॥ तर्षण तृट् तृषा ॥५॥६॥ उदकेच्छा उदन्या क्यनि ' क्षुत्तृड्गर्ध ' ॥४।३।११३ ॥ इत्युदकस्योदन् ॥ ७ ॥ ट्धें पाने धयन धीति ॥ ८ ॥ पीयते पान, तत्र ॥ ९ ॥

अथ शोषणम् ।

रसादान

शुष्यते शोषणम् ॥ १ ॥ रसानामादान रसादानम् ॥ २ ॥

भक्षकस्तु घस्मरोऽद्मर आशित ॥ ५८ ॥

भक्षयति भक्षक ॥ १ ॥ घसतीत्येवशीलो घस्मर, अत्ति अद्मर "सृघस्यदो" ॥५।२।७३ ॥ इति मरक् ॥ २ ॥ ३ ॥ आ समन्तात् अश्नाति आशित, आशिरोऽपि ॥ ४ ॥ ५८ ॥

भक्तमन्न कूरमन्धो भिस्सा दीदिविरोदन ।

अशनं जीवनकं च याजो वाजः प्रसादनम् ॥ ५९ ॥

भज्यते भक्तम् ॥१॥ अनित्यनेन अन्नं "प्याधापन्यनि "॥ (उणा-२५८) ॥ इति न, अद्यते वा ॥ २ ॥ कौत्यनेन कूरं पुक्लीबलिङ्गः, "सुरशुर" ॥ (उणा-३९६) ॥ इति रान्तो निपात्यते ॥ ३ ॥ अद्यते अन्धः "अदेरन्ध् च वा" ॥ (उणा-९६३) ॥ इत्यस् ॥ ४ ॥ अभिप्सायते भक्ष्यते भिस्सा, पृषोदरादित्वात् साधु ॥ ५ ॥ दीव्यन्त्यनेन दादिविः पुल्लिङ्गः, स्त्रियामपि वैजयन्ती, यदाह— "भिस्सा स्त्री दीदिविन पण्" न पण्ढ इत्यथ, "छविछिवि" ॥ (उणा-७०६)॥ इति व्यन्तो निपात्यते ॥ ६ ॥ उनत्ति क्लियत्योदनः "उन्देनलुक् च" ॥ (उणा-२७१) ॥ इत्यन ॥ ७ ॥ अश्यते एतदित्यशनं पुक्लीबलिङ्गौ, भुज्यादित्वादनट् ॥ ८ ॥ जाव्यतेऽनेन अनटि स्वार्थे के जीवनकम् ॥ ९ ॥ इज्यतेऽनेन याजः, घञि "यजेर्यज्ञाङ्गे" ॥४।१।११४॥ इति गत्वाभावः ॥ १० ॥ वज्यते वाजः ॥ ११ ॥ प्रसाद्यतेऽनेनात्मा प्रसादनम् ॥ १२ ॥ ५९ ॥

भिस्सटा दग्धिका

कुत्सिता भिस्सा भिस्सटा लक्ष्यानुरोधाट्, यथा-ओदनभिस्सटा, खगटी, ग्रामटी, वधूटीत्यादि ॥ १ ॥ कुत्सिता दग्धा दग्धिका ॥ २ ॥

सर्वरसाग्रे मण्डः

सर्वरसानां द्रवद्रव्याणामग्रं मुख्यं मण्डयति मण्डः पुक्लीबलिङ्गः ॥ १ ॥

अत्र तु ।

दधिजे मस्तु

अत्र तु मण्डे, दधिसम्भवे मस्यति परिणमते मस्तु क्लीबलिङ्गः 'कृसिकम्यमि" ॥ (उणा ७७३) ॥ इति तुन् ॥ १ ॥

भक्तोत्थे निःस्रावाचाममासराः ॥ ६० ॥

मण्डे भक्तसमुद्भवे निःस्राव्यते निःस्रावः ॥ १ ॥ आचाम्यते आचामः ॥ २ ॥ मीयते मासरः "मीज्यजिमा" ॥ (उणा-४३९) ॥ इति सरः ॥ ३ ॥

शेषश्चात्र—

भक्तमण्डे तु प्रस्रावप्रस्रवाच्छोटनास्रवाः ॥ ६० ॥

श्राणा विलेपी तरला यवागूरुष्णिकाऽपि च ।

श्रायते स्म श्राणा 'व्यञ्जनान्तस्थात' ॥ ४ । २ । ७१ ॥ इति क्तस्य नत्वम् ॥ १ ॥ विलिम्पति विलेपी, विलेप्याऽपि ॥ २ ॥ तरला द्रवत्वाच्चपला, स्त्री क्लीबलिङ्गः ॥३॥ यूयते पिप्पल्यादिना यवागूः स्त्रीलिङ्गः "योरागू"॥ (उणा-८५०)

इति आगू ॥४॥ उष्णादमेरचिरोद्धृता उष्णिका "उष्णात्" ॥ ७।१।१८५॥ इति संज्ञाया क ॥ ५ ॥

सूप स्यात्प्रहित सूद

सुन्वन्त्येन सूप "युसुकुरुतु-युस्वादेरूच" ॥ ( उणा-२९७ ) ॥ इति प पुस्यम्, क्लीबेऽपि वैजयन्ती, यदाह–'सूपोऽस्त्री प्रहित सूद' इति ॥१॥ प्रकपण हित प्रहितम् ॥ २ ॥ सूयते सूद ॥ ३ ॥

व्यञ्जन तु घृतादिकम् ॥ ६१ ॥

व्यज्यन्ते रसविशेषा अत्र व्यञ्जनम् ॥ १ ॥ ६१ ॥

तुल्यौ तिलान्ने कृसरत्रिसरौ

तिलैर्मिश्रमन्न तिलान्न तत्र क्रियते पवणीति कृसर "कृधूतन्यृपिभ्य कित्" ॥ (उणा ४४०)॥ इति सर ॥ १ ॥ त्रीन् सरति त्रिसर , पुम्नालिङ्गौ, क्लीबेऽपि वैज यन्ती, यदाह—'तिलतन्दुलमाषैस्तु कृसरा त्रिसरा त्रयी' इति ॥ २ ॥

अथ पिष्टक ।

पूपोऽपूप

पिष्टस्य विकार पिष्टक "नाम्नि क ॥६।२।५४॥ इति क पुक्लीबलिङ्ग, पिष्ट एव वा स्वार्थे क ॥ १ ॥ पूयते पूप 'क्षुत्पुपिपूभ्य कित्' ॥ ( उणा— ३०१ ) ॥ इति प ॥ २ ॥ अश्नुते अपूप "अश ऊप पञ्च' ॥ (उणा-३१२) ॥ इत्यूप , अद्भिरुप्यते' इति नैरुक्ता ॥ ३ ॥

शेषश्चात्र—अपूपे पारिशोल ॥

पूलिका तु पोलिकापोलिपूपिका ॥ ६२ ॥

पूपली

पूलति संहता भवति पूलिका ॥ १ ॥ पोलति वधते पोलिका ॥ २ ॥ पोल्य ते वध्यते पोलि "स्वरेभ्य इ' ॥ ( उणा—६०६ ) ॥, इति इ , ङ्या तु पोली ॥ ३ ॥ ह्रस्व पूप पूपिका ॥४॥६२॥ पूयते पूपली 'मुरलोरल' ॥ ( उणा— ४७४ ) ॥ इत्यले निपात्यते ॥ ५ ॥

अथेषत्पक्वे स्युरभ्यूषाभ्योषपौलय ।

इषत्पक्व इषदुष्टम्, तत्र अभ्यूषति भजत्यभ्यूष ॥ १ ॥ अभ्यूष्यते पच्यते अभ्योष ॥ २ ॥ पोलति वधते पोलि , पृषोदरादित्वात् ॥ ३ ॥

निष्ठान तु तेमन स्यात्

निनिष्ठति अत्रमनेन निष्ठान, पुक्लीवलिङ्ग । यद्वाचस्पति –'तेमने तु निष्ठानो ऽस्त्री, ॥ १ ॥ तिम्यत्यार्द्रीभवत्यनेन तेमनमुपसेचन, क्लोपनादयम् ॥ २ ॥

करम्भो दधिसक्तव ॥ ६३ ॥

करोति तृप्ति करम्भ ' कृञ्लेरम्भ " ॥ (उणा–३३६ ) ॥ इत्यम्भ, केन रम्यते मील्यते वा, दध्युपसिक्ता सक्तव ॥१॥

शेपश्चात्र अथ करम्भो दधिसक्तुषु ॥ ६३ ॥

घृतपूरो घृतवर पिष्टपूरश्च घार्तिक ।

घतेन पूयते, घृतपूर क्षाराब्य समितापिण्डो घृतेन श्रत ॥ १ ॥ घृतेन वरो घृतवर ॥ २ ॥ पिष्टेन पूयत पिष्टपूर ॥३॥ घृतेन संसृष्टो घार्तिक, 'संसृष्टे" ॥६।४।५॥ इतिकण ॥ ४ ॥

चमसी पिष्टवर्ति स्याद्

चम्यते चमसा ' तप्यणि "॥ ( उणा–५६९) ॥ इत्यस । गौडस्तु ' चम स पिष्टवर्ति स्यात् ' इति पुस्याह ॥ १ ॥ मुद्रादाना पिष्टस्य वर्ति पिष्टवर्ति ॥२॥

वटकस्त्ववसेकिम ॥ ६४ ॥

वट्यते वेष्ट्यते वटक " बहुलम् "॥५।१।२ ॥ इत्यक्न् यद्वा–वटति वट, तत स्वार्थे क पुक्लीवलिङ्ग ॥ १ ॥ अवसेकेन निर्वृत्तो अवसेकिम ' भावादिम " ॥ ६।४।२१ ॥ इतिम, भक्ष्यविशेष ॥ २ ॥

शेपश्चात्र—

इण्डेरिका तु वटिका शष्कुला त्वर्धलेटिका ।

पपटास्तु ममराला घृताण्डी तु घृतौपणी ॥ १ ॥

समिताखण्डाज्यकृतो मोदको लड्डुकश्च स ।

एलामरिचादियुत स पुन सिंहकेसर ॥ २ ॥ ६४ ॥

भृष्टा यवा पुनर्धाना

धीयन्ते धाना, स्त्रिया बहुवचनान्तोऽयम् ध्याधा "॥ (उणा २५८) ॥ इति न ॥ १ ॥

धानाचूर्णं तु सक्तव ।

षचि सेचन सच्यन्ते सक्तव पुक्लीवलिङ्ग एकवचनान्तोऽप्ययम् 'कृसिकम्य-मि ' ॥ (उणा–७७३ ) ॥ इति तुन् ॥ १ ॥

पृथुकश्चिपटस्तुल्यौ

पृथुवात् पृथुक आर्द्रे भृष्ट धान्यम्, तद्धि पाटनात् पृथुभवति प्रथते वा "कन्दु पांगुर "॥ (उणा-५७) ॥ इत्युक निपात्यते ॥१॥ चिपिटीभवनाच्चिपिट, चिपिटक इत्यमर ॥ २ ॥

लाजा स्यु पुनरक्षता ॥ ६५ ॥

लाज्यन्ते भृज्यन्ते लाजा, पुल्लिङ्ग, बहुवचनान्तश्च ॥ १ ॥ न क्षण्यन्ते अक्षता, पुल्लीवलिङ्ग, पुंस्यव बहुवचनान्त ॥ २ ॥ ६५ ॥

शेषश्चात्र—

लाजेषु भरुजोद्धृपखटिकापरिवारका ॥

गोधूमचूर्णे समिता

समाक्रियते समिता ॥ १ ॥

यवक्षोदे तु चिक्कस ।

चीयते चिक्कस पुल्लीवलिङ्ग 'फनसतामरसादय " ॥ (उणा-५७३) ॥ इत्यसे निपात्यते चिक्कस्यति वा । कौशिकस्तु-चिक्क इति व्यसने पठत्तस्मादसमि च्छति ॥ १ ॥

गुड इक्षुरसकाथ

गूयते क्रथ्यते गुड, कुगुहुनी ' ॥ (उणा-१७०) ॥ इति ड कित् गुडति रक्षति वा ॥ १ ॥

शर्करा तु सितोपला ॥ ६६ ॥

सिता च

शीयते शर्करा किशॄभ्य कर ॥ (उणा-४३५) ॥ इति कर ॥ १ ॥ सितोपल स्फटिकस्तत्सदृशत्वात् सितोपला ॥२॥६६॥ सायते बध्यते सिता ॥३॥

मधुधूलिस्तु खण्ड

मधुन क्षौद्रस्य धूलिरिव मधुरत्वाद् मधुधूलि ॥ १ ॥ खड्ड् मन्थे खण्ड्यते खण्ड, पुल्लीवलिङ्ग ॥ २ ॥

तद्विकृती पुन ।

मत्स्यण्डी फाणित चापि

तस्य खण्डस्य विकार मद स्यन्दते मत्स्यण्डी सामान्यशर्करा पृषो दरादित्वात् मत्स्यान् अमति रुजति मत्स्याण्डीति वैद्या यद् धन्वन्तरि — शर्करोक्ता तु मानाण्डी श्वेता मत्स्याण्डिका सिता इति । मत्स्यण्डिका खण्डसिता

क्रमेण गुणवत्तरा" इति तु वाग्भट ॥ १ ॥ फाण्यते द्रवत्वात् फाणित खण्डश्चोत, पुल्लीवलिङ्गोऽयम् यद्वाचस्पति —"फाणितमस्त्रियाम्" ॥ १॥

रसालाया तु मार्जिता ॥ ६७ ॥

शिखरिणी

रसमलति रसाला, तत्र ॥ १ ॥ मार्ज्यते मार्जिता, मर्जिताऽपि ॥ २ ॥ ६७ ॥ शिखरमस्त्यस्या शिखरिणी ॥ ३ ॥

अथ यूर्यूषो रस

यौतीत्येवशीलो यू, पुल्लिङ्ग भ्राजादित्वात् क्विपि साधु यद् वैजयन्ती— यूषोऽस्त्री यू पुमान् रसे"॥ १ ॥ यूयते मिश्रीक्रियते यूष पुल्लीवलिङ्ग 'योरूच वा ॥ (उणा-५४१) ॥ इति प, यूषति हिनस्ति रुच वा ॥ २ ॥ रस्यते रसो मुद्गादानाम् ॥ ३ ॥

दुग्ध तु सोमजम् ।

गोरस क्षीरमूधस्य स्तन्य पुसवन पय ॥ ६८ ॥

दुह्यते दुग्धम् ॥ १ ॥ सोमरसाज्जात सोमजम् ॥ २ ॥ गोर्धेन्वा रसो गोरस ॥ ३ ॥ घस्यते क्षीरम् पुल्लीवलिङ्ग । घसिवाशि ॥ (उणा—४१९) ॥ इति किदारे, "गमहन"॥४।२।४४॥ इत्युपान्त्यलोपे च घस्वस ॥२।३।३६॥ इति सस्य षत्वम् ॥ ४ ॥ ऊधसि भवमूधस्यम् ॥ ५ ॥ स्तने भव स्तन्यम् देहांशत्वाद् य ॥ ६ ॥ पुभि सूयतेऽनेन पुसवनम् ॥ ७ ॥ पीयते पय पाहाक्भ्या पयश्चौ च' ॥ (उणा--९५३) ॥ इत्यस् ॥ ८ ॥ ६८ ॥

शेषश्चात्र—

दुग्धे योग्य बालसात्म्य जीवनाय रसोत्तमम् ।
सर गव्य मधुज्येष्ठ धारोष्ण तु पयोऽमृतम् ॥

पयस्य घृतदध्यादि

पयसो विकार पयस्यम् पयोद्रोर्य" ॥ ६ । २ । ३५ ॥ इति य, आदिशब्दान्नवनीतादि ॥ १ ॥

पेयूषोऽभिनव पय ।

पीयते पेयूष कोरदूषाटरूष-' ॥ ( उणा-५६१ ) ॥ इत्यूषान्तो निपात्यते । वैजयन्ती तु- ' आ सप्ताहात् तु पेयूष ततो मोरटमोरके' इति क्लीब माह । पीयूषमित्यपि, नवप्रसूतगवीक्षीर कथित सदभिनवम् ॥ १ ॥

उभे क्षीरस्य विकृती किलाटी कूर्चिकाऽपि च ॥ ६९ ॥

किरति इभ विलाटी, पुर्स्त्रीलिङ्ग "किरे लश्च वा" ॥ (उणा-१४७) ॥ इलाट ॥१॥ कूर्चाग्रमस्तु तदस्त्यस्या कूर्चिका, कूर्चति कूर्चिका इत्यके ॥१॥६९॥

पायसं परमान्न च क्षैरेयी

पयसि संस्कृतं पायसं, पुंक्लीवलिङ्ग "संस्कृते भक्ष्ये" ॥६।२।१४०॥ इत्यण् ॥ १ ॥ परम च तदन्न च परमान्नम् ॥ २ ॥ क्षीर संस्कृता क्षैरेयी 'क्षीराद्यण्' ॥६।२।१४२॥ इत्येयण् ॥ ३ ॥

क्षीरज दधि ।

गोरसश्च

क्षीराज्जात क्षीरजम् ॥ १ ॥ दधते बलिष्ठतां दधि, क्लीबलिङ्ग, "पदिपठि" (उणा-६०७) इति इ ॥ २ ॥ ३ ॥

शेषश्चात्र—

दध्नि श्रीघनमङ्गल्ये ॥

तद्घन द्रप्स पत्रलमित्यपि ॥ ७० ॥

दृप्यतेऽनेन द्रप्स 'मावा' ॥ (उणा-५६४) ॥ इति बहुवचनात् स ततः "स्पृशादिसृपो वा ॥४।४।११२॥ इत्यकारागम द्रप्स्यमित्यपि ॥ १ ॥ पत्र लाति पत्रलम्, पत्रमस्यास्तीति वा सिध्मादित्वाद् ल ॥ २ ॥ ७० ॥

घृत हविष्यमाज्य च हविराघारसर्पिषी ।

घरति घृत पुक्लीबलिङ्ग 'शीरा' ॥ (उणा-२०१) ॥ इत्यादिना त कित् ॥ १ ॥ हविषे हित हविष्यम् उवर्णयुगादे ॥७।१।३०॥ इति य ॥ २ ॥ आ अज्यतेऽनेन आज्यम् कुप्याभिद्य ॥५।१।३९॥ इति क्यपि निपात्यते ॥ ३ ॥ हूयते हवि क्लीबलिङ्ग ॥ ४ ॥ आघारयति आघार ॥ ५ ॥ सर्पति सर्पि, क्लीब लिङ्ग रुच्यर्चि ॥ (उणा-९८९) ॥ इति इस् ॥ ६ ॥

ह्योगोदोहोद्भव हैयङ्गवीन

ह्योगोदोहस्य विकारो हैयङ्गवीन ह्योगोदोहादीनञ् हियङ्गुश्चास्य ॥६।२। ५५॥ इति इनञ् प्रस्तावाद् घृत लभ्यते । कालो नवनीतमित्याह ॥ १ ॥

शरज पुन ॥ ७१ ॥

दधिसार तक्रसार नवनीत नवोद्धृतम् ।

शराज्जात शरजम् ॥ १ ॥ ७१ ॥ दध्न सार दधिसारम् ॥ २ ॥ तक्रस्य सारं तक्रसारम् ॥ ३ ॥ दध्नो मथिताद् नव तत्काल नीतमुद्धृत च नवनीतम्, नवोद्धृतम् ॥ ४ ॥ ५ ॥

दण्डाहृते कालशेयघोलारिष्टानि गोरस ॥ ७२ ॥
रसायन

मन्थदण्डेनाऽऽहृत दण्डाहतम्  तत्र ॥ १ ॥ कलश्या मन्यन्ता भव कालशेय "दृतिकुक्षिकलशि" ॥४।२।१३०॥ इत्ययण् ॥ २ ॥ हन्यते मथा घोल  पिच्छो ल्कघोल' ॥ (उणा-४९५) ॥ इत्योलि निपात्यते ॥ ३ ॥ न रेषति हिनस्ति आरिष्टम्  सर्वरोगानितत्वात् ॥ ४ ॥ गोधन्वा रसो गोरस ॥ ५ ॥ ७२ ॥ अम्ला दान् रसानयते रसायनम् ॥ ६ ॥

अथाऽर्धाम्बूदश्वित्

अर्धमम्बु जल यत्र अर्धाम्बु  उदकेन श्वयति उदश्वित्  क्लीवलिङ्ग 'उदका श्वेर्डित्' ॥ (उणा-८८८) ॥ इति इत्  'नाम्युत्तरपदस्य च ॥३।२। १०७॥ इत्युदकस्योद ॥ १ ॥

श्वेत समादकम् ।

श्वेतते श्वेतम्  श्वेतरसमित्यपि  सममुदक यत्र समोदकम् ॥ १ ॥

तक्र पुन पादजल

तच्यति द्रुत गच्छति तक्र पुंक्लीवलिङ्ग ' ऋज्यानि-" ॥(उणा-३८८)॥ इति किद् र पादेन तुर्यांशेन जल यत्र पादजलम् ॥ १ ॥

शेषश्चात्र—
तक्रे कट्वरमारणे ।
अशाम्र परमरस ॥

मथित वारिवर्जितम् ॥ ७३ ॥

दध्नो मथनमात्रसाध्य माथितम् ॥ १ ॥ ७३ ॥

सापिष्क दाधिक सर्पिर्दधिभ्या सस्कृत क्रमात् ।

सर्पिषा सस्कृत सार्पिष्कम्  दध्ना सस्कृत दाधिकम्  सस्कृते '॥६।४।३॥ इतीकण् ॥ १ ॥ १ ॥

लवणोदकाभ्या दकलावणिक

उदकलवणाभ्या सस्कृत दकलावणिक बाहुलकादुत्तरपदवृद्धि ॥ १ ॥

उदश्विति ॥ ७४ ॥
औदश्वितमौदश्वित्क

उदश्विति सस्कृत औदश्वितम्  औदश्वित्क  वोदश्वित " ॥ ६।२।१४४॥ इतीकण् पक्षेऽण् ॥ १ ॥ २ ॥ ७४ ॥

किराति क्षुभं किलाटी, पुंस्त्रीलिङ्गः "किरो लश्च वा" ॥ (उणा-१४७) ॥ इलाट ॥१॥ कूर्चमन्नमस्तु तदस्त्यस्या कूर्चिका, कूर्चति कूर्चिका इत्यके ॥१॥६९॥

पायसं परमान्नं च क्षैरेयी

पयसि संस्कृतं पायसं, पुंक्लीबलिङ्गः "संस्कृते भक्ष्ये" ॥६।२।१४ ॥ इत्यण् ॥ १ ॥ परमं च तदन्नं च परमान्नम् ॥ २ ॥ क्षीरं संस्कृता क्षैरेयी "क्षीरादेयण्" ॥६।२।१४२॥ इत्येयण् ॥ ३ ॥

क्षीरजं दधि ।

गोरसश्च

क्षीराज्जातं क्षीरजम् ॥ १ ॥ दधते बलिष्ठतां दधि, क्लीबलिङ्गः "पदिपठि" (उणा-६०७) इति इः ॥ २ ॥ ३ ॥

शेषश्चात्र—

दध्नि श्रीघनमङ्गल्ये ॥

तद्घनं द्रप्सं पत्रलमित्यपि ॥ ७० ॥

दृप्यतेऽनेन द्रप्सं 'मावा ॥ (उणा-५६४) ॥ इति बहुवचनात् स ततः "स्पृशादिसृपो वा ॥४।४।११२॥ इत्यकारागमः द्रप्स्यमित्यपि ॥ १ ॥ पत्रं लाति पत्रलम्, पत्रमस्यास्तीति वा, सिध्मादित्वाद् लः ॥ २ ॥ ७० ॥

घृतं हविष्यमाज्यं च हविराघारसर्पिषी ।

घरति घृतं पुंक्लीबलिङ्गः 'शीरी ॥ (उणा-२०१) ॥ इत्यादिना तः कित् ॥ १ ॥ हविषे हितं हविष्यम् उवर्णयुगादे ॥७।१।३०॥ इति यः ॥ २ ॥ आ अज्यतेऽनेन आज्यम् कुप्यभिद्य' ॥५।१।३९॥ इति क्यपि निपात्यते ॥ ३ ॥ हूयते हविः क्लीबलिङ्गः ॥ ४ ॥ आघारयति आघारः ॥ ५ ॥ सर्पति सर्पिः, क्लीबलिङ्गः रुच्यर्चि ॥ (उणा-९८९) ॥ इति इस् ॥ ६ ॥

ह्योगोदोहोद्भवं हैयङ्गवीनं

ह्योगोदोहस्य विकारो हैयङ्गवीनं ह्योगोदोहादीनञ् हियङ्गुश्चास्य' ॥६।२।५५॥ इति इनञ् प्रस्तावाद् घृतं लभ्यते । कालो नवनीतमित्याह ॥ १ ॥

शरजं पुनः ॥ ७१ ॥

दधिसारं तक्रसारं नवनीतं नवोद्धृतम् ।

शराज्जातं शरजम् ॥ १ ॥ ७१ ॥ दध्नः सारं दधिसारम् ॥ २ ॥ तक्रस्य सारं तक्रसारम् ॥ ३ ॥ दध्नो मथिताद् नवं तत्कालं जातमुद्धृतं च नवनीतम्, नवोद्धृतम् ॥ ४ ॥ ५ ॥

दण्डाहते कालशेयघोलारिष्टानि गोरस ॥ ७२ ॥

रसायन

मन्थदण्डेनाऽऽहत दण्डाहतम् तत्र ॥ १ ॥ कलश्या मथन्या भव कालशेय "दृतिकुक्षिकलशि" ॥४।३।१३०॥ इत्येयण् ॥ २ ॥ हन्यते मथा घोल 'पिञ्छो लघोल" ॥ (उणा-४९५) ॥ इत्योल निपात्यते ॥ ३ ॥ न रेषति हिनस्ति अरिष्टम् सर्वरोगानिहन्तत्वात् ॥ ४ ॥ गोभवत्रा रसो गोरस ॥ ५ ॥ ७२ ॥ अम्ला दान् रसानयते रसायनम् ॥ ६ ॥

अथाऽर्धाम्बूदश्वित्

अर्धमम्बु जल यत्र अर्धाम्बु उदकेन श्वयति उदश्वित् क्लीबलिङ्ग "उदकाच्छ्वेर्डित्" ॥ (उणा-८८८) ॥ इति इत् नाम्युत्तरपदस्य च ॥३।२। १०७॥ इत्युदकस्योद ॥ १ ॥

श्वेत समादकम् ।

श्वेतते श्वेतम् श्वेतरसमित्यपि सममुदक यत्र समोदकम् ॥ १ ॥

तक्र पुन पादजल

तक्ति द्रुत गच्छति तक्र पुक्लीबलिङ्ग ऋज्यजि-" ॥ (उणा-३८८) ॥ इति किद् र पादेन तुर्यांशेन जल यत्र पादजलम् ॥ १ ॥

शेषश्चात्र—

तक्रे कट्वरसारणे ।

अर्शाघ्न परमरस ॥

मथित वारिवर्जितम् ॥ ७३ ॥

दध्ना मथनमात्रसाध्य माथितम् ॥ १ ॥ ७३ ॥

सार्पिष्क दाधिक सर्पिर्दधिभ्या सस्कृत क्रमात् ।

सर्पिषा सस्कृत सार्पिष्कम् दध्ना सस्कृत दाधिकम् 'सस्कृते" ॥ ६ । ४ । ३ ॥ इतीकण् ॥ १ ॥ १ ॥

लवणोदकाभ्या दकलावणिक

उदकलवणाभ्या सस्कृत दकलावणिक बाहुलकादुत्तरपदवृद्धि ॥ १ ॥

उदश्विति ॥ ७४ ॥

औदश्वितमौदश्वित्क

उदश्विति सस्कृत औदश्वितम् औदश्वित्क वोदश्वित" ॥ ६।२।१४४ ॥ इतीकण् पक्षेऽण् ॥ १ ॥ २ ॥ ७४ ॥

लवणे स्यात् तु लावणम् ।

लवणे संस्कृतं लावणम् "संस्कृतं भक्ष्ये" ॥६।२।१४०॥ इत्यण् ॥ १ ॥

पैठरोख्ये उखासिद्धे

उखायां स्थाल्यां सिद्धे संस्कृते पिठरे संस्कृतं पैठरम् ॥१॥ उखायां संस्कृतमु-
ख्यम् "शूलोखाद् य" ॥६।२।१४१॥ इति य ॥ २ ॥

प्रयस्तं तु सुसंस्कृतम् ॥ ७५ ॥

परिव्ययपाकादिना प्रयत्नसाध्यं प्रयस्तम्, सुष्ठु संस्कृतम् ॥ १ ॥ ७५ ॥

पक्वे राद्धं च सिद्धं च

पच्यते स्म पक्वम् तत्र उत्तरत्र 'विनाऽम्बुना' इति वचनादिहाऽम्बुनेति
लभ्यते ॥ १ ॥ राध्यति स्म राद्धम् ॥ २ ॥ सिध्यति स्म सिद्धम् ॥ ३ ॥

भृष्टं पक्वं विनाऽम्बुना ।

भृज्ज्यते स्म भृष्टम् जलेन विना पक्वम् ॥ १ ॥

भृष्टामिषं भटित्रं स्याद्भूतिर्भरूटकं च तत् ॥ ७६ ॥

भृष्टं यदङ्गारेषु विपक्वं मांसं तत् भटत्यनेन भटित्रम् 'वन्धिवहि' ॥
(उणा-४५९) ॥ इतात्र ॥ १ ॥ भवति बलमनया भूतिः ॥ २ ॥ बिभर्ति
बलं भरूटकम् कीचकपेचक ॥ (उणा-३३) ॥ इत्यके निपात्यते ॥ ३ ॥ ७६ ॥

शूल्यं शूलाकृतं मांसं

शूले संस्कृतं शूल्यम् शूलोखाद् य ॥६।२।१४१॥ इति य ॥ १ ॥
शूलाक्रियते स्म पाकाय शूलाकृतम् शूलात् पाके" ॥७।२।१४२॥ इति डाच् ।
अन्ये तु सामान्यविशेषभावं परिहृत्य अनयोर्भटित्रेणैकार्थतामाहुः ॥ २ ॥

निष्काथो रसकः समौ ।

निष्क्वाथो मांसस्य प्रस्तावात् ॥ १ ॥ रसः पिष्टमांसजस्तत्तुल्यो रसकः ॥२॥

प्रणीतमुपसम्पन्नं

प्रणीयते स्म प्रणीतं रूपरसादिनिष्पन्नमन्नम् ॥१॥ उपसम्पद्यते स्म उपसम्पन्नम् ॥२॥

स्निग्धे मसृणचिक्कणे ॥ ७७ ॥

स्निह्यति स्म स्निग्धं, तत्र ॥ १ ॥ मस्यति मसृणं 'भ्रूणतृण' ॥ (उणा-
१८६) ॥ इति णे निपात्यते ॥ २ ॥ चीयते चिक्कणं चिक्कणकुक्कण ॥
(उणा-१९०) इति अणे निपात्यते चिगित्यव्यक्तं कणति वा। कौशिकस्तु-चिक्क
इत्यस्याणे चिक्कणमिच्छति ॥ ३ ॥ ७७ ॥

पिच्छिल तु निजिनिल विज्जल विजिल च तत् ।

पिच्छा आचामोऽस्याऽस्ति पिच्छिल लोमपिच्छादे शेरम्" ॥ ७ । २ । १८ ॥ इताल ॥ १ ॥ विजते चलति निजिनिलम्, विजिल च 'शण्टिलक पिल" ॥ (उणा–४८४) ॥ इतालान्तौ निपात्येते ॥ २ ॥ ३ ॥ विज् चल जल यत्र विज्जलम्, विजिपिलमित्याप ॥ ४ ॥

भानित तु वासित स्यात्

भूण् अवकल्कने भाव्यत द्रव्यद्रव्येण मिश्रक्रियते स्म भावितम् ॥ १ ॥ वास्यते ग्व्यान्तरेण मिल्यते धूपपुष्पादिना वाऽधिवास्यते वासितम्, यन्मुनि – धूपित वासित विदु ॥ २ ॥

तुल्ये समृष्टशोधिते ॥ ७८ ॥

समृज्यते स्म समृष्ट वाल्माक्षिकादिरहितम् ॥ १ ॥ शोध्यते स्म शोधितम् ॥ २ ॥ ७८ ॥

काञ्चिक काञ्जिक धान्याम्लारनाले तुषोदकम् ।
कुल्माषाभिषुतावन्तिसोमशुक्तानि कुञ्जलम् ॥ ७९ ॥
चुक्र धातुघ्नमुन्नाह रक्षोघ्न कुण्डगोलकम् ।
महारस सुवीराम्ल सौवीर

कञ्चयति दीपयति अग्निं कञ्चते बध्नाति दोषान् वा काञ्चिक' कुपिकञ्च दिक्— ॥ (उणा ४५) ॥ इतीके निपात्यते काञ्च्या पुरि भव वा ॥ १ ॥ चस्य जले पञ्जिकावत् काञ्जिक न जलमनक्तीति वा ॥ २ ॥ धान्यमम्लयति धान्याम्लम् ॥ ३ ॥ अग्नालोऽरभक्त तन्नमारनालम् ॥ ४ ॥ तुषाणामुदक तुषोदकम् ॥ ५ ॥ कुल्माषैयवान्तिभिरद्धस्विन्नैरभिषूयते परिवास्यते स्म कुल्माषाभिषुत, व्यस्तमपि तेन कुल्माषमभिषुत चेति ॥ ६ ॥ अवन्तिषु सूयते अवन्तिसोमम् ॥७॥ शमोति निर्मलीकर्तुम्, शोचति निर्मलीभवत्यनेन वा शुक्त 'पुतपित्त' ॥ (उणा–२०४) ॥ इति ते निपात्यते ॥ ८ ॥ कुञ्ज ल्गाति कुञ्जलम् कुत्सित जलमस्य वा पृषादरादित्वात् ॥ ९ ॥ ७९ ॥ चक्यते तृप्यत्यनेन चुक्र पुक्रीवरिङ्ग 'चक्रिर मिविक्सेरुखाऽस्य' ॥ (उणा ३९३) ॥ इति र ॥ १० ॥ धातून् हन्ति धातुघ्न अचित्ते ॥ ५ । १ । ८३ ॥ इति टक् ॥ ११ ॥ उनह्यत्यनेन उन्नाहम् ॥ १२ ॥ रक्षासि हन्ति रक्षोघ्नम् तद्योगे आधिदनिर्दोषाभावात् ॥ १३ ॥ कुण्ड गुडति रक्षति ल्वे कुण्डगोलकम् ॥ १४ ॥ महान् रसोऽत्र महारसम् ॥ १५ ॥ सुवारेष्वम्ल सुवाराम्लम् ॥ १६ ॥ सुवारेषु प्रायो भव सावीरम् ॥ १७ ॥

शेषश्चात्र—

शुम्भाषाभिषुते सुरा ।

गृहाम्बु मधुरा च ॥

म्रक्षणं पुनः ॥ ८० ॥

तैलं स्नेहोऽभ्यञ्जनं च

म्रक्ष्यतेऽनेन म्रक्षणम् ॥ १ ॥ ८० ॥ तिलानां विकारस्तैलम्, क्लीबलिङ्गः ॥ ... स्नेहः, पुंक्लीबलिङ्गः ॥ २ ॥ ३ ॥ अभ्यज्यतेऽनेन अभ्यञ्जनम् ॥ ४ ॥

वेषवार उपस्करः ।

वेषं व्याप्तिं वृणीते वेषवारः, काशमर्दनिम्बकुण्डादि ॥ १ ॥ शाकादुपस्क्रियतेऽनेन उपस्करः "पुनःक्रि" ॥ ५ । ३ । १३० ॥ इति घः ॥ २ ॥

तद्भेदानाह—

स्यात् तिन्तिडीकं तु चुक्रं वृक्षाम्लं चाम्लवेतसे ॥ ८१ ॥

तिम्यति आर्द्रीभवति तिन्तिडीकं "स्रणीकाऽस्तीक" ॥ (उणा ५०) ॥ इतीके निपात्यते, तिन्तिडिशैलभवं वा ॥ १ ॥ चस्ते तृप्यत्यनेन चुक्रम्, पुंक्लीबलिङ्गः ॥ २ ॥ वृक्षस्याम्लं वृक्षाम्लम् ॥ ३ ॥ अम्लवेतसवृक्षनिर्यासोऽम्लवेतसः, तत्र ॥ ४ ॥ ८१ ॥

हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी ।

हरिं पीतं वर्णं द्राति गच्छति हरिद्रा ॥ १ ॥ काञ्चनवर्णत्वात् काञ्चनी ॥ २ ॥ पीता पीतवर्णेन ॥ ३ ॥ निशाख्येति रात्रिपर्याया ॥ ४ ॥ वरो वर्णोऽस्त्यस्या वरवर्णिनी ॥ ५ ॥

क्षवः क्षुताभिजननो राजिका राजसर्षपः ॥ ८२ ॥

असुरी कृष्णिका चासौ

क्षौत्यनेन क्षवः ॥ १ ॥ क्षुतमभिजनयति क्षुताभिजननः ॥२॥ राजते राजिका ॥ ३ ॥ सर्षपाणां राजा राजसर्षपः राजदन्तादित्वात् पूर्वनिपातः ॥ ४ ॥ ८२ ॥ अस्यते शाकादौ असुरा "वाऽयसि" ॥ (उणा ४२३) ॥ इत्युरः असुरस्त्रीव वा ॥ ५ ॥ कृष्णेव कृष्णिका वर्णेन ॥ ६ ॥

कुस्तुम्बुरु तु धान्यकम् ।

धन्या धन्याकं धान्याकं

कुत्सिता तुम्बुरुः कुस्तुम्बुरुरौषधिजातिः वर्चस्कादित्वात्, तत्फलमपि कुस्तुम्बुरु पुंक्लीबलिङ्गः ॥ १ ॥ धान्यमिव धान्यकम् ॥ २ ॥ धने साधुधन्या ॥३॥ धन्यमकति धन्याकम् ॥ ४ ॥ धान्यमकति धान्याकम् ॥ ५ ॥

पाष्ठे–" ॥ ७ । ३ । १२४ ॥ इति ट समासान्त ॥ १ ॥ इरयति वायुमेरण्ड "पिचण्डैरण्ड–" ॥ ( उणा– १७६ ) ॥ इत्यण्डे निपात्यते तत्र ॥ ३ ॥

धातक्या धातुपुष्पिका ॥ २१६ ॥

दधाति धातकी "श्लेष्मातक–" ॥ ( उणा–८३ ) ॥ इत्यातक निपात्यते तत्र ॥ १ ॥ धातुवद् रक्तानि पुष्पाण्यस्या धातुपुष्पी ॥ २ ॥ २१६ ॥

कपिकच्छूरात्मगुप्ता

कपीन् कषति कपिकच्छू स्त्रीलिङ्ग "कषेर्छश्च च प" ॥ ( उणा–८३१ ) ॥ इति ऊ ॥ १ ॥ आत्मना गुप्ता आत्मगुप्ता, स्पर्शाविषयत्वात् ॥ २ ॥

धत्तूर कनकाह्वय ।

धयति धातून् धत्तूर सिन्दूर–" ॥ ( उणा– ४३० ) ॥ इत्यूरे निपात्यते धात्तूरोऽपि ॥ १ ॥ कनकाह्वय, भुक्तेऽस्मिन् हेमवर्णपृथ्वीदर्शनात् ॥ २ ॥

कपित्थस्तु दधिफल

कपयोऽस्मिन् तिष्ठन्ति कपित्थ , कपिप्रियत्वात् कपिरिव तिष्ठतीति वा, पृषोदरादित्वात् तत्वम् ॥ १ ॥ दधिवदम्लमधुर फलमस्य दधिफल ॥ २ ॥

नालिकेरस्तु लाङ्गली ॥ २१७ ॥

वलति नालिकेर पुस्त्रीलिङ्ग ' शतेरादय " ॥ ( उणा–४३२ ) ॥ इत्येरे निपात्यते ॥ १ ॥ नालिकान् नालयुक्तान् पुष्पादीनारयति वा हलाकारपत्रशाखत्वाल्लाङ्गली ॥ २ ॥ २१७ ॥

आम्रातको वर्षपाकी

अमति आम्रातक ' श्लेष्मातकाम्रातक– ॥ ( उणा–८३ ) ॥ इति निपात्यते आम्रमतति कपिचूतत्वादिति वा ॥ १ ॥ वर्षण पाकोऽस्त्यस्य वर्षपाकी ॥ २ ॥

केतक क्रकचच्छद ।

केतति वन केतक पुस्त्रीलिङ्ग , यद्वाचस्पति – केतकस्तु द्वयो ' इति ॥ १ ॥ क्रकचाकाराणि च्छदान्यस्य क्रकचच्छद ॥ २ ॥

कोविदारो युगपत्र

कनति दाप्यते कोविदार कने कोविद–' ॥ ( उणा–४१० ) ॥ इत्यारे साधु कु भूमिं विदारयतीति वा, पृषोदरादित्वात् ॥ १ ॥ युगरूप पत्रमस्य युगपत्र ॥ २ ॥

सल्लकी तु गजप्रिया ॥ २१८ ॥

सत्र सौत्र' सरति मल्लकी, पुम्प्रालिङ्ग "दृकून्–" ॥ ( उणा– २७ ) ॥ इल्लक, सतूह्ल लस्यते खाद्यते गजैरिति वा ॥ १ ॥ गजस्य प्रिया ॥२॥२१८॥

वंशो वेणुर्यवफलस्त्वचिसारस्तृणध्वज ।

मस्कर शतपर्वा च

वमति वश 'पादावमि-" ॥ ( उणा– ५२७ ) ॥ इति श ॥ १ ॥ अजन्त्वेन वेणु पुलिङ्ग "अजिस्था–" ॥ ( उणा– ७६ ) ॥ इति णु ॥ २ ॥ यवाकार फलमस्य यवफल ॥ ३ ॥ त्वचि वल्के सारस्त्वचिसार "अदूव्यञ्ज नात्–" ॥ ३।२।१८ ॥ इति विकल्पेन सप्तम्यलुप् । त्वक्सारोऽपि ॥ ४ ॥ तृणाना ध्वज इव तृणध्वज ॥ ५ ॥ मा क्रियते प्रतिषिध्यतेऽनेन मस्कर, ववस्कादित्वात् साधु ॥ ६ ॥ शत बहूनि पर्वाण्यस्य शतपर्वा ॥ ७ ॥

स्वनन् वातात् स कीचक ॥ २१९ ॥

स वंशो वाताद् हेतो शब्दायमान क्वते बध्नाति शब्द कीचक "कीचक-" ॥ ( उणा– ३३ ) ॥ इत्यके निपात्यते, कीति चकते वा, कीचति कायति वा ॥ १ ॥ २१९ ॥

तुकाक्षीरी वंशक्षीरी त्वक्क्षीरी वंशरोचना ।

क्षीरस्य त्वगिव तुकाक्षारी ॥ १ ॥ वंशात् क्षारमस्या वशक्षीरा ॥ २ ॥ त्वच क्षीरमस्या त्वक्क्षीरा स्त्रीक्लीबलिङ्ग ॥ ३ ॥ वंशोत्था रोचना वंशरोचना ॥ ४ ॥

पूगे क्रमुक-गूवाकौ

पचते पूग पूमुदिभ्याम्-' ॥ ( उणा– ९३ ) ॥ इति किद् गस्तत्र ॥ १ ॥ क्रामति क्रमुक 'क्रमे क्रुम् च वा' ॥ ( उणा– ५१ ) ॥ इति उक ॥ २ ॥ गुवत्वेन ससक्तत्वाद् गूवाक 'मवाकश्यामाक-" ॥ ( उणा– ३७ ) ॥ इत्याके निपात्यते ॥ ३ ॥

तस्योद्वेग पुन फलम् ॥ २२० ॥

तस्य पूगस्य फलमुद्गतो वेगोऽस्य उद्वेगम् ससक्तत्वात् ॥ १ ॥ २२० ॥

ताम्बूलवल्ली ताम्बूली नागपर्यायवल्ल्यपि ।

ताम्बूल पूगवण-चूर्णसयोगस्तद्धेतुर्वल्ली ताम्बूलवल्ली ॥ १ ॥ ताम्यन्ति फाह्लत्येना ताम्बूली 'तमेनाऽऽन्तो दाघस्तु रा' ॥ ( उणा– ४८९ ) ॥ इत्यूल ॥ २ ॥ नागपर्यायेभ्य सर्पादिभ्यो वल्ली, नागस्य वल्ली पातालानीतत्वाद् नागवल्ली,

काद–" ॥ ७ । ३ । १२४ ॥ इति ट रामागान ॥ १ ॥ इरयति वायुमेरण्ड "पिचण्डैरण्ड–" ॥ ( उणा– १७६ ) ॥ इत्यण्डे निपात्यते तत्र ॥ २ ॥

धातक्या धातुपुष्पिका ॥ २१६ ॥

दधाति धातकी "श्लेष्मातक–" ॥ ( उणा–८३ ) ॥ इत्यातके निपात्यते तत्र ॥ १ ॥ धातुवद् रक्तानि पुष्पाण्यस्या धातुपुष्पी ॥ २ ॥ २१६ ॥

कपिकच्छूरात्मगुप्ता

कपीन् कषति कपिकच्छू स्त्रीलिङ्ग "कषेर्छौ च प" ॥ ( उणा– ८३१ ) ॥ इति ऊ ॥ १ ॥ आत्मना गुप्ता आत्मगुप्ता, स्पर्शाविषयत्वात् ॥ २ ॥

धत्तूर कनकाह्वय ।

धयति धातून् धत्तूर 'सिन्दूर–" ॥ ( उणा– ४३० ) ॥ इत्यूरे निपात्यते धात्तरोऽपि ॥ १ ॥ कनकाह्वय, भुक्तेऽस्मिन् हेमवर्णपृथ्वीदर्शनात् ॥ २ ॥

कपित्थस्तु दधिफल

कपयोऽस्मिन् तिष्ठन्ति कपित्थ, कपिप्रियत्वात् कपिरिव तिष्ठतीति वा पृषो दरादित्वात् तत्वम् ॥ १ ॥ दधिवदम्लमधुर फलमस्य दधिफल ॥ २ ॥

नालिकेरस्तु लाङ्गली ॥ २१७ ॥

वलति नालिकेर पुस्त्रीलिङ्ग ' शतेरादय " ॥ ( उणा–४३२ ) ॥ इत्येरे निपात्यते ॥ १ ॥ नालिकान् नालयुक्तान् पुष्पादीनारयति वा हलाकारपत्रशाख त्वाल्लाङ्गली ॥ २ ॥ २१७ ॥

आम्रातको वर्षपाकी

अमति आम्रातक ' श्लेष्मातकाम्रातक– ' ॥ ( उणा–८३ ) ॥ इति निपात्यते आम्रमतति कपिचूतत्वादिति वा ॥ १ ॥ वर्षण पाकोऽस्त्यस्य वर्ष पाकी ॥ २ ॥

केतक क्रकचच्छद ।

केतति वने केतक पुस्त्रीलिङ्ग, यद्वाचस्पति – केतकस्तु द्वयो इति ॥ १ ॥ क्रकचाकाराणि च्छदान्यस्य क्रकचच्छद ॥ २ ॥

कोविदारो युगपत्र

कवति दाप्यते कोविदार कवे कोविद–" ॥ ( उणा–४१० ) ॥ इत्यारे साधु कु भूमिं विदारयतीति वा पृषोदरादित्वात् ॥ १ ॥ युगरूप पत्र मस्य युगपत्र ॥ २ ॥

गुडति रक्षति कफ गुडूची " गुडेरूचट्" ॥ ( उणा-१२० ) ॥ ३ ॥

विशाला त्विन्द्रवारुणी ॥ २२३ ॥

विशाला, महाफलत्वात् ॥१॥ इन्द्रवत् अक्षेर्वृणोति इन्द्रवारुणा ॥२॥२२३॥

उशीर वीरणीमूले

उश्यते उशार पुक्लावलिङ्ग " घसिवशि-" ॥ ( उणा-४१९ ) ॥ इति न्दिार ॥ १ ॥ वारणा तृणविशेषस्तस्या मूल वारणामूल तत्र ॥ २ ॥

ह्रीबेरे वालक जलम् ।

जिहेताव ह्रावेर " शतेरादय " ॥ ( उणा-४३२ ) ॥ इति वेरे निपात्यते तत्र ॥१॥ बडते वाल स्वार्थ के वालम् ॥२॥ जलति जलम्, यद्वाऽस्य केशसदृश त्वात् तृद्धत्वाच्च वाल जलपर्यायवाच्यत्वमपि ॥ ३ ॥

प्रपुन्नाटस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः ॥ २२४ ॥

प्रपुणति प्रपुनाति वा प्रपुनाट "कपाट-" ॥ ( उणा- १४८ ) ॥ इति आटे निपात्यते ॥ १ ॥ एडवद् मेषाक्षत्वाद् गज्यते शब्यते एडगज ॥ २ ॥ दद्रु हन्ति दद्रुघ्न ॥ ३ ॥ चक्राणि दद्रुमण्डलानि मृद्नाति चक्रमर्दकम् ॥४॥२२४॥

लट्वाया महारजन कुसुम्भ कमलोत्तरम् ।

लटति लट्वा लटिखटि-" ॥ ( उणा- ५०५ ) ॥ इति वस्त्र ॥ १ ॥ रज्यतेऽनेन रजन महच्च तद् रजन च महारजनम् ॥ २ ॥ कुस्यति कुसुम्भ 'काकु सिम्या कुम्भ " ॥ ( उणा- ३३७ ) ॥ पुक्लावलिङ्गोऽयम् ॥ ३ ॥ कमलेभ्य उत्तर वर्णाधिक्यात् कमलोत्तरम् ॥ ४ ॥

लोध्रे तु गालवो रोध्र तिल्व शावर मार्जना ॥ २२५ ॥

रुणद्धि व्रण रोध्र, रत्वे लोध्रम्नत्र ॥ १ ॥ गालयति स्रावयति अक्षि वा स्रव 'कैरव-" ॥ ( उणा- ५१९ ) ॥ इत्यवे निपात्यते ॥ २ ॥ ३ ॥ तिलति स्निह्यतेऽङ्गमनेन तिल्व "प्रह्लाह्ला-' ॥ ( उणा- ५१४ ) ॥ इति वे निपात्यते ॥ ४ ॥ शवराणामय वृक्ष शावर ॥ ५ ॥ मार्ष्टि उद्वर्तयति अङ्गमनेन मार्जनः ॥ ६ ॥ २२५ ॥

मृणालिनी पुटकिनी नलिनी पङ्कजिन्यपि ।

मृणालमस्त्यस्या मृणालिना ॥ १ ॥ पुटकमस्त्यस्या पुटकिनी "मन्माब्जा देर्नाम्नि" ॥ ७।२।६७ ॥ इति इन् ॥ २ ॥ नलोऽस्त्यस्या नलिना "अतोऽनेक स्वरात्-" ॥ ७।२।६ ॥ इतान् ॥ ३ ॥ पङ्कजमस्त्यस्या पङ्कजिनी, अन्नादित्वादिन्,

सर्पपर्णी, फणिलता इत्यादि ॥ ३ ॥

तुम्ब्यलाबू

साम्यति तुम्बी "तुम्बरतुम्बादय" ॥ ( उणा- ३२० ) ॥ इति बे निपा त्यते ॥ १ ॥ न लम्बनेऽलाबू फाकादस नम् "नघो लम्बेनलुक् च" ॥ (उणा- ८३८ ) ॥ इत्यूः, स्त्रीशमलिङ्गावेतौ ॥ २ ॥

कृष्णला तु गुञ्जा

कृष्ण प्रान्त लाति कृष्णला ॥ १ ॥ गुञ्जति शिम्ब्या गुञ्जा ॥ २ ॥

द्राक्षा तु गोस्तनी ॥ २२१ ॥

मृद्वीका हारहूरा च

रस्यते द्राक्षा " लाक्षाद्राक्षा-" ॥ ( उणा-५९७ ) ॥ इति निपात्यते मद्रा, द्राक् क्षरति क्षीयते क्षिपति क्षिणोतीति वा " क्वचित् " ॥ ५ ।१। १७१ ॥ इति ड ॥ १ ॥ गोस्तनाभा गोस्तनी ॥ २ ॥ २२१ ॥ मृद्यते मृद्वीका ' मृदेवा ऽन्तश्च वा ' ॥ ( उणा-४९ ) ॥ इति किदाक ॥ ३ ॥ हरति पित्त हारहूरा "सिन्दूर-" ॥ ( उणा-४३० ) ॥ इत्यूरे निपात्यते ॥ ४ ॥

गोक्षुरस्तु त्रिकण्टकः ।

श्वदंष्ट्रा स्थलशृङ्गाटः

गा क्षुरयति व्यथयति गोक्षुर ॥ १ ॥ त्रय कण्टका अस्य त्रिकण्टक ॥ २ ॥ शुनो दंष्ट्रेव श्वदंष्ट्रा सञ्ज्ञाश्ब्दत्वात् "शुन " ॥ ३ । २ । ९० ॥ इति दीर्घत्वाभाव ॥ ३ ॥ स्थलस्य शृङ्गाट , स्थलशृङ्गमटतीति वा स्थलशृङ्गाट ॥४॥

गिरिकर्ण्यपराजिता ॥ २२२ ॥

गिरिरिवैव कर्णोऽस्या गिरिकर्णी ॥ १ ॥ न पराजायते रक्षाहेतुत्वादपरा जिता अप्रतिहतेत्यथ ॥ २ ॥ २२२ ॥

व्याघ्री निर्दिग्धिका कण्टकारिका स्यात्

व्याघ्रीव व्याघ्री दु स्पर्शत्वात् ॥ १ ॥ निर्दिह्यते निर्दग्धा के निर्दिग्धिका ॥ २ ॥ कण्टकानियर्ति कण्टकारा के कण्टकारिका ॥ ३ ॥

अथामृता ।

वत्सादनी गुडूची च

न म्रियते अमृता छिन्नप्ररोहत्वात् ॥ १ ॥ वत्सैरद्यते वत्सादनी ॥ २ ॥

कैरवाणि सन्त्यस्या कैरविणा तत्र ॥ १ ॥ कुमुदानि सन्त्यस्या कुमुद्वती "नडकुमुद-" ॥ ६।२।७४ ॥ इति डिद् मतु, व्यञ्जनान्ताद्वा "तदस्य-" ॥ ७।२।१ ॥ इति मतु । कुमुदिन्यपि ॥ २ ॥

उत्पल स्यात् कुवलय कुवेल कुवल कुवम् ॥ २२९ ॥

उत्पिबत्युत्पल पुक्लीबलिङ्ग "मुरल-" ॥ (उणा- ४७४) ॥ इत्यले निपात्यते, उत्पलतीति वा ॥ १ ॥ कौ वलति प्राणिति कुवलय 'कुगुवलि-' ॥ (उणा-३६५) ॥ इत्यय, कुत्सितो वहिवलय पत्रवेष्टनमस्य वा ॥ २ ॥ कौ वेलति कुवेलम् ॥ ३ ॥ कवते भ्रमरावे कुवल पुक्लीबलिङ्ग 'कोवा' ॥ (उणा-४६९) ॥ इति किदल, कौ वलतीति वा ॥ ४ ॥ कुत्सित वातीति कुव 'क्वचित्" ॥ ५ । १ । १७१ ॥ इति ड ॥ ५ ॥ २२९ ॥

अस्य विशेषानाह—

श्वेते तु तत्र कुमुद कैरव गर्दभाह्वयम् ।

तत्र उत्पले श्वेते काम्यते कुमुद पुक्लीबलिङ्ग "कुमुद-" ॥ (उणा-२४४) ॥ इत्युदे निपात्यते कौ मोदत इति वा । कुमुदपि ॥ १ ॥ करोति सुख कैरव 'कैरवभैरव-" ॥ (उणा-५१९) ॥ इत्यवे निपात्यते के रौति कैरवा हसस्त स्येद प्रियमिति वा ॥ २ ॥ गदभस्याह्वयोऽस्य गदभाह्वयम् ॥ ३ ॥

नीले तु स्यादिन्दीवर

नाले उत्पल इन्दति श्रिया इ दावर ' तीवर-' ॥ (उणा-४४४) ॥ इति वरटि निपात्यते ॥ १ ॥

हल्लक रक्तसन्ध्यके ॥ २३० ॥

ह्लाति घूणते हल्लकम् ॥ १ ॥ रक्तान् स धानकति रक्तसन्ध्यकम्, रक्तस न्ध्येव वा तत्र । रक्तोत्पल चैतत् ॥ २ ॥ २३० ॥

सौगन्धिके तु कल्हार

सुगन्ध प्रयोजनमस्य सौगन्धिकम् ॥ १ ॥ कल्यते कल्हार "द्वारश्रृङ्गार-' ॥ (उणा-४११) ॥ इत्यारे निपात्यते, के ल्हादते वा, पृषोदरादित्वात् । शारद शुक्र चैतत् ॥ २ ॥

बीजकोशो वराटक ।

कर्णिका

बाजाना पद्माक्षनाम्ना कोशो बाजकोश ॥ १ ॥ वरमटति वराटक

यौगिकत्वात् कमलिनीत्यादय ॥ ४ ॥

फमल नलिन पद्ममरविन्द कुशेशयम् ॥ २२६ ॥
पर शत सहस्राभ्या पत्र रानीव पुष्करे ।
विसप्रसूत नालीक तामरस महोत्पलम् ॥ २२७ ॥
तज्जलात् सरस पङ्कात् परेरुड् रुह-जन्म-जै ।

काम्यते श्रिया कमल "मृदिकन्दि–" ॥ ( उणा– ४६५ ) ॥ इत्यल, कमम्भोऽलति भूषयति वा, केन मल्यत इति वा ॥ १ ॥ नलति नलिन "स्था पदि–" ॥ ( उणा– २८२ ) ॥ इतान ॥ २ ॥ पद्यते पद्म "अर्तीरि–" ॥ ( उणा– ३३८ ) ॥ इति म । एते पुक्लीबलिङ्गा ॥ ३ ॥ अरान् विन्दति अर विन्द 'निगवादेनाम्नि" ॥ ५।१।६१ ॥ इति श ॥ ४ ॥ कुशे जले शेते कुशे शय "शयवासिवासेष्वकालात्" ॥ ३।२।२५ ॥ इति सप्तम्यलुप् ॥ ५ ॥ २२६ ॥ शत सहस्रशब्दाभ्यां पर पत्रम्, शतसहस्रे बहुत्वलक्षण शत शहस्र च पत्राण्यस्य शतपत्रम् सहस्रपत्रम् ॥६॥७॥ राज्य सन्त्यस्य राजावम्, मण्यादित्वाद्व ॥ ८ ॥ पुष्यति जले पुष्कर 'सृपुषिभ्या कित्' ॥ ( उणा– ४३६ ) ॥ इति कर ॥ ९ ॥ विसात् प्रसूत विसप्रसूतम् । विसप्रसूनमपि ॥ १० ॥ नलति नालीक पुक्लीबलिङ्ग "सृणीक–" ॥ ( उणा– ५० ) ॥ इतीके निपात्यते ॥ ११ ॥ तम्यते तामरस "फनस–" ॥ ( उणा– ५७३ ) ॥ इत्यसे निपात्यते, ताम सप्रकर्षो रसोऽस्येति वा, तम प्रकर्षार्थ तारतम्यवत्, ताम्यद्भिर्भृङ्गैरस्यते वा ॥१२॥ महच्च तदुत्पल च महोत्पलम् ॥ १३ ॥ २२७ ॥ तत् कमल जलशब्दात्, सर शब्दात्, पङ्कशब्दाच्च परे रुडादिभिरुच्यत इत्यर्थ जलरुट् जलरुहम्, जलजन्म जलजम्, ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ सरोरुट् सरोरुहम् सरोजन्म, सरोजम्, ॥ १८ ॥ १९ ॥ २०॥२१॥ पङ्करुट् पङ्करुहम् पङ्कजन्म, पङ्कजम् । यौगिकत्वाद् वारिज सरसी रुहादय ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

पुण्डरीक सिताम्भोज

पुणति पुण्डते वा पुण्डरीक 'सृणीक– ॥ ( उणा– ५० ) ॥ इतीके निपात्यते ॥ १ ॥ सित श्वेतमम्भोज सिताम्भोजम् ॥ २ ॥

अथ रक्तसरोरुहे ॥ २२८ ॥
रक्तोत्पल कोकनद

रक्त च तत् सरोरुह च रक्तसरोरुह तत्र ॥ १ ॥ २२८ ॥ रक्त शोणमुत्पल रक्तोत्पलम् ॥ २ ॥ कोकैश्चक्रवाकैर्नदति कोकनदम् ॥ ३ ॥

धान्य तु सस्य सीत्य च व्रीहि स्तम्बकरिश्च तत् ।

धन्यते धान्यम्, धीयत इति वा "धामाजि-" ॥ ( उणा- ३७९ ) ॥ इत्यन्य, व्रीह्यादि, यदाहु -

" व्रीहिर्यवो मसूरो गोधूमा मुद्गमापतिलवणका ।
अणव प्रियङ्गु कोद्रवमयुच्छका शालिराढक्य ॥ १ ॥
स्त्रिय कलाय कुलत्थौ शणसप्तदशानि धान्यानि ॥" ॥ १ ॥

सस्यते सुखमनेन सस्य "स्थान्छा-" ॥ ( उणा- ३५७ ) ॥ इति य ॥२॥ सीतया सङ्गत सीत्य "सीतया सङ्गते" ॥ ७ । १ । २७ ॥ इति य ॥ ३ ॥ व्राह्यते यान्यत इति व्राहि "व्रियो हिक्" ॥ ( उणा- ७१० ) ॥ ४ ॥ स्तम्ब करोति स्तम्बकरि । पुलिङ्गावेतो " शकृत् स्तम्बाद्वत्सव्राही कृग ॥ ५ । १ । १०० ॥ इति इ ॥ ५ ॥

आशु स्यात् पाटलो व्रीहि

व्राहि पष्टिका धान्यविशेष पाटलच्छाय ॥ १ ॥ अश्नुते आशु पुलिङ्ग "कृवापाजि- ' ॥ ( उणा- १ ) ॥ इत्युण्, शीघ्रपाकत्वाद्वा, यद् दुर्ग - 'आश्वाश्या शालि शाघ्रयो ' इति ॥ २ ॥

गर्भपाकी तु षष्टिक ॥ २३४ ॥

गर्भे पच्यते स्वयमेवेत्येवशीलो गभपाकी णिनि न्यङ्क्वादित्वात् साधु ॥ १ ॥ षष्टिरात्रेण पच्यते षष्टिक "यवयवकषष्टिकाद्य ' ॥ ७ । १ । ८१ ॥ इत्यन षाष्टिकेति निर्देशात् साधु ॥ २ ॥ २३४ ॥

शालय कलमाद्या स्यु

शलति शालय पुलिङ्ग "कमिवमि- ॥ ( उणा- ६१८ ) ॥ इति णिदि कलम आद्यो येषा कलमाद्या ॥ १ ॥

कलमस्तु कलामक ।

कडति मायत्यनेन कडम "सृपृप्रथि-" ॥ ( उणा- ३४७ ) ॥ इत्यम, लत्वे कलम ॥ १ ॥ कला कलनाममति कलामक ॥ २ ॥

लोहितो रक्तशालि स्यात्

लोहितो वर्णेन ॥ १ ॥

महाशालि सुगन्धिक ॥ २३५ ॥

महावासौ शालिश्च महाशालि ॥ १ ॥ शोभनो गन्धोऽस्य सुगन्धि " सु

॥ २ ॥ असत्यपि कर्णभवत्वे करवात् कर्णे भवा कर्णिका " कणललाटात्-" ॥
॥ ६ । ३ । १४१ ॥ इति कल् ॥ ३ ॥

पद्मनाल तु मृणाल तन्तुल विसम् ॥ २३१ ॥

पद्मस्य नाल पद्मनालम् ॥ १ ॥ 'मृणत् हिंसायां' मृण्यतेऽवते मृणाल मिलिङ्ग "मृलिपिलि-" ॥ ( उणा-४७६ ) ॥ इति किदाल, मृदमालायत वा " पचन्दि " ॥ ५ । १ । १७१ ॥ इति डे पृषोदरादित्वात् साधु ॥ २ ॥ तन्तून् लाति तन्तुलम् ॥ ३ ॥ वेति विस " पटिवीभ्याम्-' ॥ (उणा-५७९) ॥ इति टिस, विस्रते प्रेर्यते वा ॥ ४ ॥ २३१ ॥

किञ्जल्क केसर

मिथिघलति, किं मुदिसत जीर्यते वा किञ्जल्क " निष्कतुरुष्क-" ॥ (उणा-२६) ॥ इति के निपात्यते ॥ १ ॥ के सरति केसरम्। पुंक्लीबलिङ्गावेतौ ॥२॥

सवर्त्तिका तु स्याद् नव दलम् ।

सवर्त्तयति वेष्टयति सवर्त्तिका पद्मादीना नवोद्भिन्न दल शरयन्त्रिकाख्यम्॥१॥

करहाट शिफा च स्यात् कन्दे सलिलजन्मनाम् ॥२३२॥

क रहयन्ति करहा- पद्मादयो जलोरथास्तानटति करहाट, कार्यते वा " कपाटविराट-" ॥ ( उणा-१४८ ) ॥ इत्याटे निपात्यते ॥ १ ॥ शिनोति दारयति क्ष्मा शिफा ॥ २ ॥ कनति कन्द 'शाशपि-" ॥ (उणा-२३७) ॥ इति द, पुंक्लीबलिङ्ग, कन्द्यतेऽविध्यते वा तत्र, सलिलजन्मना पद्मादीनाम् ॥३॥२३२॥

उत्पलाना तु शालूक

उत्पलाना कन्दे शलति शालूक ' शल्यणेणित् " ॥ ( उणा-५९ ) ॥
॥ इत्यूक ॥ १ ॥

नील्या शैवाल शेवले ।
शेवाल शैवल शेपाल जलात् शूक नीलिके ॥ २३३ ॥

नालति नाली, नालावर्णा वा तस्याम् ॥ १ ॥ शेतेऽम्भसि शैवाल शेवल शैवल शेपाल शाडस्तल‌स्पालवालण्वलण्वला ॥ ( उणा- ५०१ ) ॥ इति चत्वारोऽपि साधव । शेवाल तु शेपालस्य जपादित्वाद् वत्वे साधु ॥ २ ॥ ३ ॥
॥ ४ ॥ ५ ॥ ६ ॥ जलशब्दात् परे शूक नीलिके- जलस्य शूकमिव जलशूकम् । शैवालाद्या षडपि पुंक्लीबलिङ्गा ॥ ७ ॥ जल नालयति अणि स्वार्थे के जलनालिका ॥ ८ ॥ २३३ ॥

नील ॥ ५ ॥ हरि, हरिवर्णत्वात् पुलिङ्ग ॥ ६ ॥

पीतेऽस्मिन् वसु खण्डीर प्रवेल जय शारदा ॥ २३८ ॥

अस्मिन् मुद्गे पीतवर्ण वसति वित्ते वसु पुलिङ्ग ॥ १ ॥ खन्यते खण्डीर "जम्बार–" ॥ (उणा–४२०) ॥ इतारे निपात्यते ॥ २ ॥ प्रवेलति प्रवेल ॥ ३ ॥ जयत्यनेन जय ॥ ४ ॥ शरदि भव शारद "भतुमध्यादरण्" ॥ ६ । ३ । ॥ ८९ ॥ ५ ॥ २३८ ॥

कृष्णे प्रवर वासन्त हरिमन्थज-शिम्बिका ।

कृष्णे मुद्गे प्रव्रियते प्रवर ॥ १ ॥ वसन्त भवो वासन्त ॥ २ ॥ हरि मन्थाज्जायते हरिमन्थज ॥ ३ ॥ शिम्बाऽस्त्यस्य शिम्बिक, व्राह्यादित्वादिक, शिम्बिभि कायति वा ॥ ४ ॥

वनमुद्गे तुवरक निगूढक कुलीनका ॥ २३९ ॥

खण्डी च

वनस्य मुद्गो वनमुद्गस्तत्र, तुवर कषाय स एव तुवरक ॥ १ ॥ निगूहति स्म निगूढक ॥ २ ॥ कौ लायते कुलानक "कीचक–" ॥ ( उणा–३३ ) ॥ इत्यके निपात्यते ॥ ३ ॥ २३९ ॥ खण्डमस्त्यस्य खण्डी ॥ ४ ॥

राजमुद्गे तु मकुष्ठक मयुष्टकौ ।

मुद्गाना राजा प्रधानत्वाद् राजमुद्गस्तत्र ॥ १ ॥ मङ्क्यतेऽनेन मकुष्ठ ॥ २ ॥ मीयतेऽसौ मयुष्ट "पष्ठिधिठ–" ॥ ( उणा–१६६ ) ॥ इति ठ निपात्यते ॥ ३ ॥

गोधूमे सुमन

गुध्यति परिवेष्टयति गोधूम "कुषिगुधेरूम" ॥ ( उणा–३५३ ) ॥ गा धुनाति वा ' विलिभिलि– ॥ ( उणा–३४० ) इति किद् मस्तत्र ॥ १ ॥ सुष्ठु मन्यते सुमन अच् ॥ २ ॥

वल्ले निष्पाव शितशिम्बिक ॥ २४० ॥

वल्लते वल्लस्तत्र ॥ १ ॥ निष्पूयते निष्पाव "निरभे पूल्व" ॥ ५ । ३ । २१ ॥ इति घञ ॥ २ ॥ शिता शिम्बिरस्य शितशिम्बिक ॥ ३ ॥ २४० ॥

कुलत्थस्तु कालवृन्त

कुले तिष्ठति कुलत्थ, पृषोदरादित्वात् ॥१॥ काल वृन्तमस्य कालवृन्त ॥२॥

ताम्रवृन्ता कुलत्थिका ।

ताम्र वृन्तमस्यास्ताम्रवृन्ता ॥ १ ॥ ह्रस्व कुलत्थ कुलत्थिका ॥ २ ॥

पृपुगुगुगे -" ॥ ७ । ३ । १४४॥ गौ इट् समागा¯१, के मुगभिक ॥२॥२३५॥

यवो हयप्रियस्तीक्ष्णशूक

मुगो यव ॥ १ ॥ हयानां प्रियो हयप्रिय ॥ २ ॥ तीक्ष्ण शूक किं शादरम्य तीक्ष्णशूक ॥ ३ ॥

तोक्मस्तरमो हरित् ।

अगौ यवो हरि तिल, तुज्यते तोक्म "हक्ममाध्म-" ॥ (उणा-३४६)॥ इति म निपातोऽ ॥ १ ॥

मङ्गल्यको मसूर स्यात्

मङ्गल साधु मङ्गल्य, के मङ्गल्यक ॥ १ ॥ मस्यते परिणमते मसूर, पुस्त्री लिङ्ग "मीमसि-" ॥ ( उणा-४२७ ) इत्यूर ॥ २ ॥

फलायस्तु सतीनक ॥ २३६ ॥

हरेणु खण्डिकश्च

फल्यते कलाय त्रिपुटाख्य "कुलिलुलि-" ॥ ( उणा- ३७२ ) ॥ इति काय, कलामतीसारमयते वा, क लातातिं वा ॥१॥ सीदन्त्यनेन सतान दिन नम्र-' ॥ (उणा- २६८) ॥ इति साधु, के सतीनक । सातीनोऽपि ॥२॥२३६॥ ह्रियते हरेणु, पुलिङ्ग 'हृहभू-" ॥ ( उणा- ७७२ ) ॥ इत्येणु ॥ ३ ॥ खण्ड्यत खण्डिक "कुशिक-" ॥ ( उणा- ४५ ) ॥ इतीके निपात्यते ॥ ४ ॥

अथ चणको हरिमन्थक ।

चणति दरयमानःचणक ' दृकृनृ- ' ॥ ( उणा- २७ ) ॥ इत्यक ॥ १ ॥ हरिभिमथ्यते हरिमन्थक ॥ २ ॥

माषस्तु मदनो नन्दी वृष्यो बीजवरो बली ॥ २३७ ॥

मायते माष पुक्लीबलिङ्ग 'वृकृतृ- ॥ ( उणा- ५४० ) ॥ इति ष ॥ १ ॥ मदयाति वृक्षत्वाद् मदन ॥ २ ॥ नन्दयत्यवश्य नन्दी ॥ ३ ॥ वृषाय मैथुनाय हितो वृष्य प्राण्यङ्गरथ- ॥ ७।१।३७ ॥ इति य वृष्यते तैलादिनेति ' कुवृषि- ॥ ५।१।४२ ॥ इति क्यप् वा ॥ ४ ॥ बीजेषु वरा बीजवर, बीज शुक्र वणोति वा ॥ ५ ॥ बल रेतोऽस्त्यत्र बली ॥ ६ ॥ २३७ ॥

मुद्गस्तु प्रथनो लोभ्यो बलाटो हरितो हरि ।

मोदतेऽनेन मुद्ग पूमुदिभ्या कित् ॥ ( उणा- ९३ ) ॥ इति ग ॥१॥ प्रथते प्रथन ॥ २ ॥ लुभ्यते लोभ्य ॥ ३ ॥ बलमटति बलाट ॥ ४ ॥ हरितो

अथोद्दाल कोद्रव कोरदूषक ॥ २४३ ॥

उद्दाल्यते उद्दाल ॥ १ ॥ केन अम्भसा उनत्ति क्लियते कोद्रव ' कैरव-" ॥ ( उणा- ५१९ ) ॥ इत्यवे निपात्यते, केन उद्रौति वा ॥२ ॥ कुरन्त्यनेन कोर दूषक " कोरदूष-" ॥ ( उणा-५६१ ) ॥ इत्यपे निपात्यते, कोर भक्त दूषय तीति वा ॥ ३ ॥ २४३ ॥

चीनकस्तु काककङ्गु

चायते चीन " दिननग्न-" ॥ ( उणा-२६८ ) ॥ इति नै निपात्यते के चीनक ॥ १ ॥ काकप्रिया कङ्गु काककङ्गु ॥ २ ॥

यवनालस्तु योनल ।

जूर्णाह्वयो देवधान्य जोन्नाला बीजपुष्पिका ॥ २४४ ॥

यवस्येव नालमस्य यवनाल ॥१॥ यूयते योनल " मुरल-" ॥ ( उणा-४७४ ) ॥ इत्यले निपात्यते ॥ २ ॥ 'जूरौचि जराया' जूर्यते जूर्ण ' डीयश्च्यैदित " ॥ ४ । ४ । ६१ ॥ इति क्तस्य नत्वम्, जूर्ण इत्याह्वयो यस्य जूर्णाह्वय ॥३॥ देवप्रिय धान्य देवधान्यम् ॥ ४॥ जनाद् नालमस्या जोन्नाला, पृषोदरादित्वात् ॥५॥ बीजाकार पुष्पमस्या बीजपुष्पिका ॥ ६ ॥ २४४ ॥

शण भङ्गा मातुलानी स्यात्

शणति शणम् ॥ १ ॥ भज्यते भङ्गा ॥ २ ॥ मान तोल्यते मातुलानी "मुमुचान-" ॥ ( उणा-२७८ ) ॥ इति निपात्यते, माया प्रियस्तुलया अनितीति वा ॥ ३ ॥

उमा तु क्षुमाऽतसी ।

अवयते उमा " अवेह्रस्व-" ॥ ( उणा-३४२ ) ॥ इति किति मे साधु ॥ १ ॥ क्षात्यनया भुक्तया क्षुमा ' क्षुहिभ्या वा ॥ ( उणा- ३४१ ) ॥ इति किद् म ॥ २ ॥ अतत्यनयाऽतसी ' तप्यणि-' ॥ ( उणा- ५६९ ) ॥ इति अस , न तस्यतीति वा ॥ ३ ॥

गवेधुका गवेधु स्यात्

गूयते गवेधुका मुयन "गुड इधुक एधुनौ ' ॥ ( उणा- ७४ ) ॥ गवी धुकाऽपि ॥ १ ॥ गवाऽम्भसा एधते गवेधु , क्लालिङ्ग "भृमृतृ-" ॥ ( उणा-७१६ ) ॥ इति बहुवचनादु ॥ १ ॥

जर्तिलोऽरण्यजस्तिल ॥ २४५ ॥

आऽफी तुवरी वर्णा स्यात्

आ ढौक्यते आढकी "कीचक-" ॥ (उणा-३३) ॥ इत्यके निपात्यते ॥ १ ॥ तूयते तुवरी ॥ २ ॥ वर्ण्यते वर्णा ॥ ३ ॥

कुल्माषस्तु यावक ॥ २४१ ॥

कोलति कुल्माष अधस्तिष्ठो माषादि "कल्युलिभ्या मासक्" ॥ (उणा-५८४) ॥ कुलन गच्छति परिणमने वा पृषोदरादित्वात् । कुल्माषोऽपि ॥१॥ यौत्यम्भसा यावक 'धान्यविशेष' इत्यन्ये ॥ २ ॥ २४१ ॥

नीवारस्तु वनव्रीहि

नियर्नियत नीवार, मुन्यन्नत्वात् " नेवु " ॥ ५ । ३ । ७४ ॥ इति घञ् ॥ १ ॥ वनस्य व्रीहिर्वनव्रीहिः ॥ २ ॥

श्यामाक-श्यामको समौ ।

श्यायते श्यामाक जघन्यो व्रीहि "मवाकश्यामाक-" ॥ (उणा-३७) ॥ इत्याके निपात्यते ॥ १ ॥ 'कीचक-' ॥ (उणा- ३३) ॥ इत्यके निपातनात् श्यामाक ॥ २ ॥

कङ्गुस्तु कङ्गुनी कङ्गु प्रियङ्गु पीततण्डुला ॥ २४२ ॥

कायति कङ्गु "प्रीकैपै-" ॥ (उणा-७६१) ॥ इति कङ्गु ॥१॥ कङ्गति कङ्गुना "दिननम-" ॥ (उणा- २६८) इति ने निपात्यते ॥ २ ॥ कुत्सितमगति कङ्गु "फलिवरयमे ॥ (उणा- ७५८) ॥ इति गु ॥ ३ ॥ प्रीणाति प्रियङ्गु ॥४॥ पीतास्तण्डुला अस्या पाततण्डुला । एते स्त्रीलिङ्गा ॥ ५ ॥ २४२ ॥

सा कृष्णा मधुका

सा कङ्गु कृष्णवर्णा मन्यते वल्प्यते मधुका "कञ्चुक-" ॥ (उणा-५७) ॥ इत्युके निपात्यते ॥ १ ॥

रक्ता शोधिका

रक्तवर्णा कङ्गु शोधयति शोधका ॥ १ ॥

मुसटी सिता ।

सिता कङ्गु मुस्यते खण्ड्यते मुसटी "कपट-" ॥ (उणा- १४४) ॥ इत्यटे निपात्यते ॥ १ ॥

पीता माधवी

पीतवर्णा कङ्गु मधुन इवेय तद्वर्णत्वाद् माधवी ॥ १ ॥

अथोद्दाल कोद्रव कोरदूषक ॥ २४३ ॥

उद्दाल्यते उद्दाल ॥ १ ॥ केन अम्भसा उनत्ति क्लिद्यते कोद्रव 'केरव-" ॥ ( उणा- ५१९ ) ॥ इत्यत्रे निपात्यते, केन उद्रौति वा ॥२ ॥ कुरत्यनेन कोर दूषक " कोरदूष-" ॥ ( उणा-५६१ ) ॥ इत्यूपे निपात्यते, कोर भक्त दूषयतीति वा ॥ ३ ॥ २४३ ॥

चीनकस्तु काककङ्गु

चीयते चीन " दिननग्न-" ॥ ( उणा-२६८ ) ॥ इति ने निपात्यते के चीनक ॥ १ ॥ काकप्रिया कङ्गु काककङ्गु ॥ २ ॥

यवनालस्तु योनल ।

जूर्णाह्वयो देवधान्य जोन्नाला बीजपुष्पिका ॥ २४४ ॥

यवस्येव नालमस्य यवनाल ॥१॥ यूयते योनल " मुरल-" ॥ ( उणा- ४७४ ) ॥ इत्यले निपात्यते ॥ २ ॥ 'जूरेचि जराया जूयते जूण ' डोयइत्यैदित " ॥ ४ । ४ । ६१ ॥ इति क्तस्य नत्वम्, जूण इत्याह्वयो यस्य जूर्णाह्वय ॥३॥ देवप्रिय धान्य देवधान्यम् ॥ ४॥ जनाद् नालमस्या जोन्नाला, पृषोदरादित्वात् ॥५॥ बीजाकार पुष्पमस्या बीजपुष्पिका ॥ ६ ॥ २४४ ॥

शण भङ्गा मातुलानी स्यात्

शणति शणम् ॥ १ ॥ भज्यते भङ्गा ॥ २ ॥ मान तोलयते मातुलानी ' मुमुचान-' ॥ ( उणा-२७८ ) ॥ इति निपात्यते, मात्रा भ्रियस्तुलया अनितीति वा ॥ ३ ॥

उमा तु क्षुमाऽतसी ।

अव्यते उमा " अवहस्वश्च-" ॥ ( उणा-३४२ ) ॥ इति किति मे साधु ॥ १ ॥ क्षौत्यनया भुक्तया क्षुमा "क्षुद्विभ्या वा ॥ ( उणा- ३४१ ) ॥ इति किद् म ॥ २ ॥ अतत्यनयाऽनसी ' तप्यणि-' ॥ ( उणा- ५६९ ) ॥ इति अस , न तस्यतीति वा ॥ ३ ॥

गवेधुका गवेधु स्यात्

गूयते गवेधुका गुत्यन "गुड इधुक एधुकौ" ॥ ( उणा- ७४ ) ॥ गवी धुकाऽपि ॥ १ ॥ गवाऽम्भसा एधते गवेधु, स्त्रालिङ्ग "भृमृतृ-" ॥ ( उणा- ७१६ ) ॥ इति बहुवचनाद् ॥ १ ॥

जर्तिलोऽरण्यजस्तिल ॥ २४५ ॥

आढकी तुवरी वर्णा स्यात्

आ ग्राकर आन्ती " कीजक–" ॥ ( उणा–३३ ) ॥ इत्यके निपात्यते ॥ १ ॥ तूयते तुवरी ॥ २ ॥ वर्ण्यते वर्णा ॥ ३ ॥

कुल्मासस्तु यावकः ॥ २४१ ॥

कोलति कुल्माष अर्धस्विन्नो माषादि " कल्यिकुलिभ्या मासक् " ॥ (उणा–५८४)॥ कुलेन मस्यति परिणमते वा पृषोदरादित्वात् । कुल्माषोऽपि ॥१॥ यविषम्भसा यावक धान्यविशेष ' इत्यन्ये ॥ २ ॥ २४१ ॥

नीवारस्तु वनव्रीहिः

नियतंम्रियते नीवार, मुन्यन्नत्वात् " नेर्वृ " ॥ ५ । ३ । ७४ ॥ इति घञ् ॥ १ ॥ वनस्य व्रीहिर्वनव्रीहिः ॥ २ ॥

श्यामाक-श्यामकौ समौ ।

श्यायते श्यामाक जघन्यो व्रीहि "मवाकश्यामाक–" ॥ ( उणा–३७ ) ॥ इत्याके निपात्यते ॥ १ ॥ 'काचक– ॥ ( उणा– ३३ ) ॥ इत्यके निपातनात् श्यामक ॥ २ ॥

कङ्गुस्तु कङ्गुनी कङ्गु प्रियङ्गु पीततण्डुला ॥ २४२ ॥

कायति कङ्गु "प्रीकैपै–' ॥ ( उणा–७६१)॥ इति कङ्गु ॥१॥ कङ्गति कङ्गुनी ' दिननम–" ॥ ( उणा– २६८ ) इति ने निपात्यते ॥ २ ॥ कुत्सितमगति कङ्गु "फलिवल्यमे ॥ ( उणा– ७५८ ) ॥ इति गु ॥ ३ ॥ प्राणाति प्रियङ्गु ॥४॥ पीतास्तण्डुला अस्या पीततण्डुला । एते स्त्रीलिङ्गा ॥ ५ ॥ २४२ ॥

सा कृष्णा मधुका

सा कङ्गु कृष्णवर्णा मन्यते कल्प्यते मधुका "कञ्चुक–" ॥ ( उणा–५७)॥ इत्युके निपात्यते ॥ १ ॥

रक्ता शोधिका

रक्तवर्णा कङ्गु शोधयति शोधिका ॥ १ ॥

मुसटी सिता ।

सिता कङ्गु मुस्यते खण्ड्यते मुसटी "कपट–' ॥ ( उणा– १४४ ) ॥ इत्यटे निपात्यते ॥ १ ॥

पीता माधवी

पीतवर्णा कङ्गु मधुन इवेय तद्वर्णत्वाद् माधवी ॥ १ ॥

अथोद्दाल कोद्रव कोरदूषक ॥ २४३ ॥

उद्दारयते उद्दाल ॥ १ ॥ केन अम्भसा उनत्ति क्लियते कोद्रव 'कैरव-" ॥ ( उणा- ५१९ ) ॥ इत्यवे निपात्यते केन उद्रौति वा ॥२॥ कुरत्यनेन कोर दूषक " कोरदूष-" ॥ ( उणा-५६१ ) ॥ इत्यूपे निपात्यते, कोर भक्त दूषय तीति वा ॥ ३ ॥ २४३ ॥

चीनकस्तु काकरुङ्ग

चीयते चीन " दिननग्न-" ॥ ( उणा-२६८ ) ॥ इति ने निपात्यते के चीनक ॥ १ ॥ काकप्रिया कङ्गु काकङ्गु ॥ २ ॥

यवनालस्तु योनल ।

जूर्णाह्वयो देवधान्य जोन्नाला बीजपुष्पिका ॥ २४४ ॥

यवस्येव नालमस्य यवनाल ॥१॥ यूयते योनल " मुरल-" ॥ ( उणा- ४७४ ) ॥ इत्यले निपात्यते ॥ २ ॥ 'जूरैचि जराया' जूर्यते जूण "डीयश्व्यैदि त " ॥ ४ । ४ । ६१ ॥ इति क्तस्य नत्वम्, जूर्ण इत्याह्वयो यस्य जूणाह्वय ॥३॥ देवप्रिय धान्य देवधान्यम् ॥ ४॥ जनाद् नालमस्या जोनाला, पृषोदरादित्वात् ॥५॥ बीजाकार पुष्पमस्या बीजपुष्पिका ॥ ६ ॥ २४४ ॥

शण भङ्गा मातुलानी स्यात्

शणति शणम् ॥ १ ॥ भज्यते भङ्गा ॥ २ ॥ मान तोरयते मातुलानी ' मु मुचान-" ॥ ( उणा-२७८ ) ॥ इति निपात्यते, माया श्रियस्तुलया अनितीति वा ॥ ३ ॥

उमा तु क्षुमाऽतसी ।

अव्यते उमा " अवेहस्वश्च-" ॥ ( उणा-३४२ ) ॥ इति किति मे साधु ॥ १ ॥ क्षौत्यनया भुक्तया क्षुमा "क्षुहि-या वा' ॥ ( उणा- ३४१ ) ॥ इति किद् म ॥ २ ॥ अतत्यनयाऽनसौ 'तप्याणि-' ॥ ( उणा- ५६९ ) ॥ इति अस , न तस्यतीति वा ॥ ३ ॥

गवेधुका गवेधु स्यात्

गूयते गवेधुका मुन्यन्न "गुड इधुक एधुकौ" ॥ ( उणा- ७४ ) ॥ गवी धुकाऽपि ॥ १ ॥ गवाऽम्भसा एधते गवेधु, स्त्रालिङ्ग "भृमृतृ-" ॥ ( उणा- ७१६ ) ॥ इति बहुवचनाद् ॥ १ ॥

जर्त्तिलोऽरण्यजस्तिल ॥ २४५ ॥

जायते जतिल "स्थण्डिल-" ॥ ( उणा- ४८४ ) ॥ इतीले निपात्यते ॥ १ ॥ २४५ ॥

पण्डतिले तिलपिञ्जम्तिलपेज ।

पण्डो निष्फलतिलस्तत्र ॥ १ ॥ तिलपिञ्ज तिलपेज "निष्फले तिलात् पिञ्जपेजौ" ॥ ७ । १ । १५८ ॥ इति साधू ॥ २ ॥ ३ ॥

अथ सर्षप ।

कदम्बकस्तन्तुभ

सरति सर्षप "सस पप" ॥ ( उणा- ३१३ ) ॥ १ ॥ कुत्सितमम्बते कदम्बक ॥ २ ॥ तोतुभ्यते तन्तुभ , पृषोदरादित्वात् ॥ ३ ॥

अथ सिद्धार्थ श्वेतसर्षप ॥ २४६ ॥

सिद्धप्रयोजनो रक्षोघ्नत्वात् सिद्धार्थ ॥ १ ॥ २४६ ॥

मापादय शमीधान्य

माप आदिर्येषा मुद्गादानां ते मापादय , शमी शम्बा तत् प्रधान धान्य शमीधान्यम् ॥ १ ॥

शूकधान्य यवादय ।

शूकप्रधान धान्य शूकधान्य यव आदिर्येषा गोधूमादाना ते यवादय ॥१॥

स्यात् सस्यशूक किंशारु

शवति शूक पुन्नीबलिङ्ग "घुयुहि-" ॥ ( उणा- २४ ) ॥ इति कादधिरव च सस्यस्य शूक सस्यशूकम् ॥ १ ॥ कुत्सित शृणाति किंशारु पुलिङ्ग "किम श्रो णित् " ॥ ( उणा- ७२५ ) ॥ इरु ॥ २ ॥

कणिश सस्यशीर्षकम् ॥ २४७ ॥

कणति वातेन कणिश पुक्लीबलिङ्ग "कुलिकनि-" ॥ ( उणा- ५२५ ) ॥ इति किश । कनिशमपि ॥ १ ॥ सस्यमय शापमपि सस्यशापक सस्यमञ्जरी त्यथ ॥ २ ॥ २४७ ॥

स्तम्बस्तु गुच्छो धान्यादे

स्तभ्नाति स्तम्ब तुम्बस्तम्ब-' ॥ (उणा-३२ ) ॥ इति निपात्यते धान्यादे य स्तम्ब स नालम् ॥१॥ गुध्यतेऽनेन गुच्छ ॥ २ ॥ य प्रति स्तम्बोऽप्रसिद्धस्त प्रत्यन्यथा विध्यनुवादौ स्याताम् । एव मवत्रोनेयम् ॥

नाल काण्ड

नलति नालमर्थाद् गुच्छस्य निलिङ्ग, ज्वलादित्वात् ण ॥ १ ॥ कणति भज्यमान काण्ड पुक्लीवलिङ्ग ॥ २ ॥

अफलस्तु स ।

पल पलाल

फलरहित स काण्ड पलति पल ॥ १ ॥ पल्यते पलाल "ऋकृमृ-"[१] ॥ (उणा- ४७५) ॥ इत्याल ॥ २ ॥ पुक्लीवलिङ्गावेतौ ॥

धान्यत्वक् तुष

धान्यस्य त्वक्, तुष्यत्यनेनाग्निस्तुष, स्थादित्वात् क ॥ १ ॥

बुसे कडङ्गर ॥ २४८ ॥

बुसते उत्सृज्यते बुस पुक्लीवलिङ्ग, स्थादित्वात् क, तत्र ॥ १ ॥ कडन्ति माद्यन्त्यनेन पशव कडङ्गर 'कडेरेवर-" ॥ (उणा- ४४५) ॥ इत्यङ्गर ॥ २ ॥ २४८ ॥

धान्यमावसित रिद्ध

धान्य व्रीह्यादि ॥ १ ॥ आ अवसित निष्पन्नम् । 'रक्षार्थमाच्छादितमावसितम्' इत्यन्ये ॥ २ ॥ राध्यति स्म रिद्ध सिद्धमित्यर्थ । 'सुसम्पन्नम्' इत्येके । पृषोदरादित्वादित्वम् ॥ ३ ॥

तत्पूत निर्बुसीकृतम् ।

तद् धान्य निर्बुसीकृत पूयते स्म पूतम ॥ १ ॥

मूलपत्रकरीराग्रफलकाण्डाविरूढका ॥ २४९ ॥

त्वक् पुष्प फलक शाक दशधा शिग्रुक च तत् ।

मूल मूलकविसादे, पत्र निम्बादे करीर वशादे अग्र करीरवृक्षादे, फल वार्ताक्यादे काण्डमेरण्डवशादे विरूढा क्षेत्रोद्धृतस्य फलमूलादे स्वेदात्तवोद्भिना अङ्कुरा अविरूढक तालास्थिमज्जा इति गौडा ॥ २४९ ॥ त्वक् कदल्यादे, पुष्प करीरवृक्षादे, कवक छत्राकाख्यभूकन्दविशेष । एवमेतत् दशधाऽपि शक्यतेऽनेन भोक्तु शाकम् ॥ १ ॥ शिनोति शिग्रु, के शिग्रुकम् ॥ २ ॥ पुक्लीवलिङ्गावेतौ ॥

अथ शाकविशेषानाह-

तण्डुलीयस्तण्डुलेरो मेघनादोऽल्पमारिष ॥ २५० ॥

तण्डुलेभ्यो हितस्तण्डुलीय "हविरन्नभेदापूपादेर्या वा" ॥ ७।१।२९ ॥ इतीय ॥ १ ॥ तण्डुलमेरोरयति द्रावकत्वात्तण्डुलेर ॥ २ ॥ मेघस्येव नादोऽस्माद् मेघनाद ॥ ३ ॥ अल्प गृणाति हिनस्ति अल्पमारिष "अभिमृभ्या णित्" ॥ ( उणा– ५४९ ) ॥ इताष ॥ ४ ॥ २५० ॥

बिम्बी रक्तफला पीलुपर्णी स्यात्तुण्डिकेरिका ।

बभाति बिम्बी 'वीनीबन्धि–" ॥ ( उणा– ३२५ ) ॥ इति डिम्ब ॥ १ ॥ रक्त फलमस्या रक्तफला ॥ २ ॥ पिलोरिव पर्णान्यस्या पीलुपर्णी ॥ ३ ॥ तुण्ड्यते तुण्डिकेरी "शतेरादय " ॥ (उणा–४३२) ॥ इति निपात्यते, के तुण्डिकेरिका ॥४॥

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥ २५१ ॥

जीवतात् जीवन्ती "दृहिनन्दि–" ॥ ( उणा– २२० ) ॥ इत्यन्त ॥ १ ॥ जीवत्यनया जीवनी, "करणे–" ॥ ५।३।१०६ ॥ इत्यप्रत्यये जावा, "बहुलम्' ॥ ५।१।२ ॥ इति करणेऽप्यनीये जीवनीया ॥ २ ॥३॥ ४ ॥ मधु स्रवति मधुस्रवा ॥ ५ ॥ २५१ ॥

वास्तुकं तु क्षारपत्र

वसन्त्यस्मिन् गुणा वास्तुक "कञ्चुकाशुक–" ॥ (उणा–५७) ॥ इति साधु ॥ १ ॥ क्षीर पत्रमस्य क्षीरपत्रम् ॥ २ ॥

पालक्या मधुसूदनी ।

पालके साधु पालक्या, पाल्यत इति वा 'शिक्यास्याढ्य–' ॥ ( उणा– ३६४ ) ॥ इति ये निपात्यते ॥ १ ॥ मधु माधुर्यं सूदते मधुसूदना ॥ २ ॥

रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ॥ २५२ ॥

महाकन्द –

अम्लेन रसेनोनो रसोन , पञ्चरसत्वात्, यद्याडि – 'ऊनोऽम्लेन रसेनेति रसो नस्तेन कीर्तित ॥ १ ॥ लष्यतेऽभिलष्यते लशुन "लषे श च "॥(उणा–२८९)॥ इत्युन ॥ २ ॥ पुंक्लीबलिङ्गावेतौ । न रिष्यतेऽरिष्ट ॥ ३ ॥ म्लेच्छानां प्रिय, कन्दो म्लेच्छकन्द ॥ ४ ॥ महौषधम्, रोगजित्त्वात् ॥ ५ ॥ २५२ ॥ महांश्चासौ कन्दश्च महाकन्द ॥ ६ ॥

रसोनोऽन्यो गृञ्जनो दीर्घपत्रक ।

अन्यो द्वितीयो रसोन गृञ्ज्यते कुत्सित शब्द्यते गृञ्जन पुंक्लीबलिङ्ग ॥ १ ॥ दीर्घपत्रमस्य दीर्घपत्रक ॥ २ ॥

भृङ्गराजो भृङ्गरजो मार्कव केशरञ्जन ॥ २५३ ॥

भृङ्गवद् राजते भृङ्गराज ॥ १ ॥ भृङ्गवद् रञ्जयति कृष्णीकरोति भृङ्गरज, अचि पृषोदरादित्वाद् नलोप ॥ २ ॥ मर्कति सम्पृच्यते मार्कव "कैरवभरव-" ॥ (उणा- ५१९) ॥ इति साधु ॥ ३ ॥ केशान् रञ्जयति केशरञ्जनम् ॥ ४ ॥ २५३ ॥

काकमाची वायसी स्यात् ।

काकवत् मचते वर्णेन सम्पृच्यते काकमाचा ॥१॥ वायसवर्णत्वाद् वायसी ॥२॥

कारवेल्ल कटिल्लक ।

करेण वल्लति कारवेल्ल ॥ १ ॥ कटल्लावृणोति कटिल्ल "भिल्लाच्छभल्ल-" ॥ (उणा- ४६४) ॥ इति ल्ले निपात्यते, कटि लातीति वा, पृषोदरादित्वाद् द्वित्वम् ॥ २ ॥

कूष्माण्डकस्तु कर्कार

कुष्यते कूष्माण्ड 'पिचण्ड-" ॥ (उणा- १७६) ॥ इत्यण्डे निपात्यते, कोरुष्मणाऽनितीति वा, कुत्सितमुष्मा अण्डेषु बीजेष्वस्य वा, पित्तकारित्वात् ॥ १ ॥ कर्कि सौत्र, कर्कति कर्कारु पुलिङ्ग 'कर्करारु" ॥ (उणा-८१३) ॥ करोति तृप्तिं कक, इयर्ति अरुर्मस्तिशोधनसमर्थत्वात्, कश्चासावरुश्चेति वा ॥२॥

कोशातकी पटोलिका ॥ २५४ ॥

कुश्यति कोशातकी "श्लेष्मातक-' ॥ (उणा- ८३) ॥ इति निपात्यते, कोशाकाराणि फलान्यतति वा ॥ १ ॥ पटति पटोली "कटिपटि-" ॥ (उणा- ४९३) ॥ इत्योल ॥ २ ॥ २५४ ॥

चिर्भिटी कर्कटी वालुङ्क्येर्वारुस्त्रपुसी च सा ।

चिरि सौत्र खादौ, चिरणोति चिर्भिटी 'चिरेरिटो भ् च-" ॥ (उणा- १४९) ॥ इति साधु ॥ १ ॥ कर्कति कर्कटी "दिव्यवि-" ॥ (उणा- १४२) ॥ इत्यट ह्रस्व कक इति वा भामटीवत् ॥ १ ॥ वलति वालुङ्की "कञ्चुक-" ॥ (उणा- ५७) ॥ इति निपात्यते ॥ ३ ॥ ऊर्वति हिनस्त्यार्तिमिर्वारु पुस्त्रीलिङ्ग "उर्वेरादेरूदेतौ च ॥ (उणा- ८१४) ॥ इत्यारु ॥ ४ ॥ त्रपत इव त्रपुसी "त्रपेरुस ॥ (उणा- ५७८) ॥ ५ ॥

अर्शोघ्न सूरण कन्द

अर्शांसि हन्ति अर्शोघ्न ॥ १ ॥ सूयते प्रेर्यते वा सूरण "चिक्कण-" ॥ (उणा- १९०) ॥ इत्यणे निपात्यते ॥ २ ॥ कन्द्यते कन्द पुंक्लीबलिङ्ग, मूलविशेष ॥ ३ ॥

तण्डुलेभ्यो हितस्तण्डुलीय "हविरन्नभेदापूपादर्या वा" ॥ ७।१।२९ ॥ इतीय ॥ १ ॥ तण्डुलमनीरयति शाकत्वात्तण्डुलेर ॥ २ ॥ मेघस्येव नादोऽस्माद् मेघनाद ॥ ३ ॥ अन्न मृणाति हिनस्ति अन्नमारिष "अभिमृभ्या णित्" ॥ ( उणा– ५४९ ) ॥ इतीष ॥ ४ ॥ २५० ॥

भिम्बी रक्तफला पीलुपर्णी स्यात्तुण्डिकेरिका ।

बभाति बिम्बी "ष्ठीनीवन्धि–" ॥ ( उणा– ३२५ ) ॥ इति बिम्ब ॥ १ ॥ रक्त फलमस्या रक्तफला ॥ २ ॥ पीलोरिव पर्णान्यस्या पीलुपर्णी ॥ ३ ॥ तुण्ड्यते तुण्डिकेरी "शतेरादय " ॥ (उणा–४३२) ॥ इति निपात्यते, के तुण्डिकेरिका ॥४॥

जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा ॥ २५१ ॥

जावर्तति जीवन्ती "ऋहिनन्दि–" ॥ ( उणा– २२० ) ॥ इत्यन्त ॥ १ ॥ जीवत्यनया जीवनी, "करणे–" ॥ ५।३।१०६ ॥ इत्यप्रत्यये जीवा "बहुलम्" ॥ ५।१।२ ॥ इति करणेऽप्यनीये जीवनीया ॥ २ ॥३॥ ४ ॥ मधु स्रवति मधुस्रवा ॥ ५ ॥ २५१ ॥

वास्तुक तु क्षारपत्र

वसन्त्यस्मिन् गुणा वास्तुक "कञ्चुकांशुक–" ॥ (उणा–५७) ॥ इति साधु ॥ १ ॥ क्षार पत्रमस्य क्षारपत्रम् ॥ २ ॥

पालक्या मधुसूदनी ।

पालके साधु पालक्या, पाल्यत इति वा 'शिक्यास्याढ्य–" ॥ ( उणा– ३६४ ) ॥ इति ये निपात्यते ॥ १ ॥ मधु माधुर्य सूदते मधुसूदनी ॥ २ ॥

रसोनो लशुनोऽरिष्टो म्लेच्छकन्दो महौषधम् ॥ २५२ ॥

महाकन्द

अम्लेन रसेनोनो रसोन, पञ्चरसत्वात्, यदाहि – 'ऊनोऽम्लेन रसेनेति रसोनस्तेन कीर्तित ' ॥ १ ॥ लश्यतेऽभिलष्यते लशुन "लषे श च" ॥(उणा–२८९)॥ इत्युन ॥ २ ॥ पुवलीबलिङ्गावेतौ । न रिष्यतेऽरिष्ट ॥ ३ ॥ म्लेच्छाना प्रिय, कन्दो म्लेच्छकन्द ॥ ४ ॥ महौषधम्, रोगजित्त्वात् ॥ ५ ॥ २५२ ॥ महाश्चासौ कन्दश्च महाकन्द ॥ ६ ॥

रसोनोऽन्यो गृञ्जनो दीर्घपत्रक ।

अन्यो द्वितीयो रसोन गृञ्ज्यते कुत्सित शब्द्यते गृञ्जन पुवलीबलिङ्ग ॥ १ ॥ दीर्घपत्रमस्य दीर्घपत्रक ॥ २ ॥

भृङ्गराजो भृङ्गरजो मार्कव केशरञ्जन ॥ २५३ ॥

भृङ्गवद् राजते भृङ्गराज ॥ १ ॥ भृङ्गवद् रञ्जयति कृष्णीकरोति भृङ्गरज, अचि पृषोदरादित्वाद् लोप ॥ २ ॥ मर्कति मपृच्यते मार्कव "केरवभरव-" ॥ (उणा- ५१९) ॥ इति साधु ॥ ३ ॥ केशान् रञ्जयति केशरञ्जनम् ॥ ४ ॥ २५३ ॥

काकमाची वायसी स्यात् ।

काकवत् मचते वणन सपृच्यते काकमाचा ॥१॥ वायसवणत्वाद् वायसी ॥२॥

कारवेल्ल कटिल्लक ।

कारेण वल्लति कारवेल्ल ॥ १ ॥ कटल्यावृणोति कटिल्ल "भिल्लाच्छभल्ल-" ॥ (उणा-४६४) ॥ इति ले निपात्यते, कटि लातीति वा, पृषोदरादित्वाद् द्विलम् ॥ २ ॥

कूष्माण्डकस्तु कर्कारु

कुष्यते कूष्माण्ड 'पिचण्ड-' ॥ (उणा- १७६) ॥ इत्यण्डे निपात्यते, कोरुष्मणाऽनितीति वा, कुत्सितमुष्मा अण्डेषु बीजेष्वस्य वा, पित्तकारित्वात् ॥ १ ॥ कर्कि सौत्र, कर्कति कर्कारु पुलिङ्ग 'ककारु" ॥ (उणा-८१३) ॥ करोति तृप्तिं कर्क, इयर्ति अरुवस्तिशोधनसगत्वात्, कर्कश्चासावरुश्चेति वा ॥२॥

कोशातकी पटोलिका ॥ २५४ ॥

कुश्यति कोशातकी 'श्लेष्मातक-" ॥ (उणा- ८३) ॥ इति निपात्यते, कोशाकाराणि फलान्यतनि वा ॥ १ ॥ पटति पटोली "कटिपटि-" ॥ (उणा-४९३) ॥ इत्योल ॥ २ ॥ २५४ ॥

चिर्भिटी कर्कटी वालुङ्क्येर्वारुस्त्रपुसी च सा ।

चिरि सौत्र स्वार्थे, चिरणोति चिर्भिटी 'चिरेरिटो भ् च-" ॥ (उणा- १४९) ॥ इति साधु ॥ १ ॥ कर्कति कर्कटी 'दिव्यवि-" ॥ (उणा- १४२) ॥ इत्यट दूस करु इति वा ग्रामटीवत् ॥ १ ॥ वलति वालुङ्की "कञ्चुक-" ॥ (उणा- ५७) ॥ इति निपात्यते ॥ ३ ॥ ऊर्वति हिनस्त्यार्त्तिमेर्वारु पुस्त्रीलिङ्ग "उर्वेरादेश्चैतौ च' ॥ (उणा- ८१४) ॥ इत्यारु ॥ ४ ॥ त्रपत इव त्रपुसी "त्रपेरुस' ॥ (उणा- ५७८) ॥ ५ ॥

अर्शोघ्न सूरण कन्द

अर्शांसि हन्ति अर्शोघ्न ॥ १ ॥ सूयते प्रेर्यते वा सूरण "चिक्कण-" ॥ (उणा- १९०) ॥ इत्यणे निपात्यते ॥ २ ॥ कन्दते कन्द पुक्लीबलिङ्ग, मूलविशेष ॥ ३ ॥

शृङ्गवेरकमार्द्रकम् ॥ २५५ ॥

शृणाति रसानां शृङ्गवेर 'शतेरादयः" ॥ ( उणा- ४३२ ) ॥ इति निपात्यते, शृङ्गोत्सलिप्त वरं देहोऽस्येति वा ॥ १ ॥ आर्द्रमेव आर्द्रकं पुंक्लीबलिङ्ग ॥ २ ॥ २५५ ॥

कर्कोटक किलासघ्नस्तिक्तपत्र सुगन्धक

करोति किलासहिंसां कर्कोट "कपोटकर्कोट-" ॥ ( उणा- १६१ ) ॥ इत्योटे निपात्यते, के कर्कोटक ॥ १ ॥ किलास हन्ति किलासघ्न ॥ २ ॥ तिक्त पत्रमस्य तिक्तपत्र ॥ ३ ॥ सुष्ठु गन्धयते सुगन्धक ॥ ४ ॥

मूलक तु हरिपर्ण सेकिम हस्तिदन्तकम् ॥ २५६ ॥

मूलमेव मूलक पुंक्लीबलिङ्ग ॥ १ ॥ हरि नील पर्णमस्य हरिपर्णम् ॥ २ ॥ सेकेन निर्वृत्त सेकिम 'भावादिम" ॥ ६।४।२१ ॥ इतीम ॥ ३ ॥ हस्तिदन्त प्रतिकृति हस्तिदं तकम् ॥ ४ ॥ २५६ ॥

तृण नडादि नीवारादि च

तृण तृणजातीयमित्यर्थं ॥ १ ॥ नडादि नडप्रकार नीवारादि नीवारप्रकार-मित्यर्थं ॥ २ ॥

शष्प तु तद् नवम् ।

तत् तृण नवोद्भिन्न बालमिति यावत्, शश्यते शष्प पुंक्लीबलिङ्ग 'शादिबाधि-" ॥ ( उणा- २९९ ) ॥ इति प, पञ्चान्तस्य ॥ १ ॥

सौगन्धिक देवजग्ध पौर कत्तृण रौहिषे ॥ २५७ ॥

सुगन्ध प्रयोजनमस्य सौगन्धिकम् ॥१॥ देवैर्जग्धमिवान्त शुषिरत्वाद् देवजग्धम् ॥ २ ॥ पुरे भव पौरम् ॥ ३ ॥ कुत्सित तृण कत्तृण 'तृणे जातौ' ॥ ३।२।१३२ ॥ इति को कदादेश ॥ ४ ॥ रोहति यत्र तत्र रौहिष, पुंक्लीबलिङ्ग 'रुहे वृद्धिश्च" ॥ ( उणा- ५४८ ) ॥ इतीष ॥ ५ ॥ २५७ ॥

दर्भ कुश कुथो बर्हि पवित्र

दृणाति पारुष्याद् दर्भ 'गृदृरमि- ॥ (उणा- ३२७) ॥ इति भ दृश्यते ऽसाविति वा ॥ १ ॥ कौ शेते कुश पुंक्लीबलिङ्ग 'क्वचित् ॥ ५।१।१७१ ॥ इति ड ॥ २ ॥ कुथ्नाति कुथ ॥३॥ बृहति बर्हि पुंक्लीबलिङ्ग "बर्हिबृहर्नलुक् च" ॥ (उणा ९९०) ॥ इतीस् ॥ ४ ॥ पूयतेऽनेन पवित्र "ऋषिनाम्नी करणे" ॥ ५।२।८६ ॥ इतीत्र ॥ ५ ॥

अथ तेजन ।

गुन्द्रो मुञ्ज शर

तेजयति शिनोति वा तेजन ॥ १ ॥ गुणैर्दाया द्रात्यस्मिन् गुन्द्र, पृषो दरादित्वात् ॥ २ ॥ मुञ्जति वायुना मुञ्ज ॥ ३ ॥ शृणाति पादस्थान् शर ॥ ४ ॥

दूर्वा त्वनन्ता शतपर्विका ॥ २५८ ॥

हरिताली रुहा

दूर्यते पशुभि, दूरे वाति वा, पृषोदरादित्वात् ॥१॥ अनन्ता, दूरप्रसरणात् ॥ २ ॥ शत बहूनि पर्वाण्यस्या शतपर्विका ॥ ३ ॥ २५८ ॥ हरिता मालत्व मलति हरिताली ॥ ४ ॥ रोहति रुहा ॥ ५ ॥

पोटगलस्तु धमनो नड ।

पोटेन सश्लेषेण गलति पोटगल ॥१॥ 'धमि सौत्र' धमत्यन्त शुषिरत्वाद् धमन ॥ २ ॥ नडत्यर्दयति डलयोरैक्ये नड पुल्लिङ्ग ॥ ३ ॥

कुरुविन्दो मेघनामा मुस्ता

कुरुन् देश विन्दति कुरुविन्द ॥ १ ॥ मेघस्य नामाऽस्य मेघनामा मेघपर्याय, अम्बुधरत्वात् ॥ २ ॥ मुस्यति खण्डयति मुस्ता स्त्रीलिङ्ग 'शीरी-" ॥ ( उणा- ३०१ ) ॥ इति क्ति, मुस्तकोऽपि ॥ ३ ॥

गुन्द्रा तु सोत्तमा ॥ २५९ ॥

सा मुस्ता उत्तमा गोद तेऽनया गुन्द्रा "खुरक्षुर-" ( उणा- ३९६ ) ॥ इति रे निपात्यते गुणैर्दोषा द्रात्यस्यामिति वा ॥ १ ॥ २५९ ॥

वल्वजा उलप

वलन्ति वल्वजा पुंसि बहुवचना त "वलेर्नान्तश्च वा" ॥ ( उणा- १३३)॥ इत्यज ॥ १ ॥ दलते उलप 'विष्टपोलप-" ॥ ( उणा- ३०७ ) ॥ इत्यपे निपात्यते ॥ २ ॥

अथेक्षु स्याद् रसालोऽसिपत्रक ।

इष्यते इक्षु पुलिङ्ग 'मस्जीष्यशिभ्य क्सु' ॥ ( उणा- ८२६ ) ॥ ॥ १ ॥ रसमलत्यालाति वा रसाल ॥ २ ॥ असिवाकाराणि पत्राण्यस्य असिपत्रक ॥ ३ ॥

भेदा कान्तार-पुण्ड्राद्यास्तस्य

शृङ्गवेरकमार्द्रकम् ॥ २५५ ॥

शृणोति रमानां शृङ्गबेरं 'शसेरादय" ॥ (उणा– ४३२) ॥ इति निपात्यते, शृङ्गोपलक्षितं बेरं देहोऽस्येति वा ॥ १ ॥ आर्द्रमेव आर्द्रकं पुक्लीबलिङ्ग ॥ २ ॥ २५५ ॥

कर्कोटकं किलासघ्नस्तिक्तपत्रः सुगन्धकः

करोति किलासादिनां करीति "कपोटककोट–" ॥ (उणा– १६१) ॥ इत्योटे निपात्यते, के कर्कोटक ॥ १ ॥ किलासं हन्ति किलासघ्न ॥ २ ॥ तिक्तं पत्रमस्य तिक्तपत्र ॥ ३ ॥ सुष्ठु गन्धयते सुगन्धक ॥ ४ ॥

मूलकं तु हरिपर्णं सेकिमं हस्तिदन्तकम् ॥ २५६ ॥

मूलमेव मूलकं पुक्लीबलिङ्ग ॥ १ ॥ हरि नील पर्णमस्य हरिपर्णम् ॥ २ ॥ सेकेन निर्वृत्तं सेकिमं "भावादिमः" ॥ ६ । ४ । २१ ॥ इतीम ॥ ३ ॥ हस्तिदन्तप्रतिकृति हस्तिदन्तकम् ॥ ४ ॥ २५६ ॥

तृणं नडादि नीवारादि च

तृणं तृणजातमित्यर्थ ॥ १ ॥ नडादि नडप्रकार नीवारादि नीवारप्रकार इत्यर्थ ॥ २ ॥

शष्पं तु तद् नवम् ।

तत् तृणं नवोद्भिन्नं बालमिति यावत्, शीयते शष्पं पुक्लीबलिङ्ग 'शादिबाधि–" ॥ (उणा– २९९) ॥ इति प, षत्वान्तस्य ॥ १ ॥

सौगन्धिकं देवजग्धं पौरं कत्तृणं रौहिषे ॥ २५७ ॥

सुगन्ध प्रयोजनमस्य सौगन्धिकम् ॥१॥ देवैर्जग्धमिवान्त शुषिरत्वाद् देवजग्धम् ॥ २ ॥ पुरे भवं पौरम् ॥ ३ ॥ कुत्सितं तृणं कत्तृणं 'तृणे जातौ' ॥ ३।२।१३२ ॥ इति को कदादेश ॥ ४ ॥ रोहति यत्र तत्र रौहिष, पुक्लीबलिङ्ग "रुहे वृद्धिश्च" ॥ (उणा– ५४८) ॥ इताष ॥ ५ ॥ २५७ ॥

दर्भः कुशः कुथो बर्हिः पवित्रं

दृणाति पारुष्याद् दर्भं "गृदृरमि–" ॥ (उणा– ३२७) ॥ इति भ दृश्यते ऽसाविति वा ॥ १ ॥ कौ शेते कुश पुक्लीबलिङ्ग क्वचित् ॥ ५ । १ । १७१ ॥ इति ड ॥ २ ॥ कुथ्नाति कुथ ॥३॥ बृहति बर्हि, पुक्लीबलिङ्ग, "बहिवृहेर्नलुक् च" ॥ (उणा ९९०) ॥ इतीस् ॥ ४ ॥ पूयतेऽनेन पवित्रं "ऋषिनाम्नो करणे" ॥ ५।२।८६ ॥ इतीत्र ॥ ५ ॥

अथ तेजन ।

गुन्द्रो मुञ्ज शर

तेजयति शिनोति वा तेचा ॥ १ ॥ गुर्णदांवा द्रा स्यस्मिन् गुन्द्र, पृषो दरादित्वान् ॥ २ ॥ मुञ्जति वायुना मुञ्ज ॥ ३ ॥ शृणाति पारुष्यान् शर ॥ ४ ॥

दूर्वा त्वनन्ता शतपर्विका ॥ २५८ ॥

हरिताली रुहा

दू र्यते पशुभि, दूरे वाति वा, पृषोदरादित्वात् ॥१॥ अनन्ता, दूरप्रसरणात् ॥ २ ॥ शत बहूनि पर्वाण्यस्या शतपर्विका ॥ ३ ॥ २५८ ॥ हरितां नाल्त्व मलति हरिताली ॥ ४ ॥ रोहति रुहा ॥ ५ ॥

पोटगलस्तु धमनो नड ।

पोटेन सश्लेषेण गलति पोटगल ॥१॥ 'धमि सौत्र' धमत्यन्त सुषिरत्वाद् धमन ॥ २ ॥ नन्त्यदयति उत्योरैक्ये नड पुष्पावलिङ्ग ॥ ३ ॥

कुरुविन्दो मेघनामा मुस्ता

कुरुन् देश वि दति कुरुविन्द ॥ १ ॥ मेघस्य नामाऽस्य मेघनामा मेघपर्याय, अम्बुरत्त्वात् ॥ २ ॥ मुस्यति खण्डयति मुस्ता स्त्रिलिङ्ग 'शारी-" ॥ ( उणा- ३०१ ) ॥ इति क्ति, मुस्तकोऽपि ॥ ३ ॥

गुन्द्रा तु सोत्तमा ॥ २५९ ॥

मा मुस्ता उत्तमा गोद-तेऽनया गु द्रा "सुरशुर-" ( उणा- ३९६ ) ॥ -इति रे निपात्यते गुर्णदांवा द्रात्यस्यामिति वा ॥ १ ॥ २५९ ॥

बल्वजा उलप

वलन्ति वल्वजा पुंसि बहुवचना त "वलेर्वान्तश्च वा" ॥ ( उणा- १३३)॥ इत्यज ॥ १ ॥ दलते उलप विटपोलप-" ॥ ( उणा- ३०७ ) ॥ इत्यपे निपात्यते ॥ २ ॥

अथेक्षु स्याद् रसालोऽसिपत्रक ।

इष्यते इक्षु पुलिङ्ग "महजीष्यशिभ्य क्सु" ॥ ( उणा- ८२६ ) ॥ ॥ १ ॥ रसमलत्याल्राति वा रसाल ॥ २ ॥ असयाकाराणि पत्राण्यस्य असि पत्रक ॥ ३ ॥

भेदा कान्तार-पुण्ड्राद्यास्तस्य

शृङ्गवेरकमार्द्रकम् ॥ २५५ ॥

शृणोति रसानां शृङ्गवेरं "शलेरादय" ॥ (उणा- ४३२) ॥ इति निपात्यते, शृङ्गोपलक्षितं वरं देहोऽस्येति वा ॥ १ ॥ आर्द्रमेव आर्द्रकं पुंक्लीबलिङ्ग ॥ २ ॥ २५५ ॥

कर्कोटकं किलासघ्नस्तिक्तपत्रः सुगन्धकः

करोति किलासादिशो कर्कोटः "करोटकर्कोट-" ॥ (उणा- १६१) ॥ इत्योटे निपात्यते, क कर्कोटकः ॥ १ ॥ किलासं हन्ति किलासघ्नः ॥ २ ॥ तिक्तं पत्रमस्य तिक्तपत्रः ॥ ३ ॥ सुष्ठु गन्धयते सुगन्धकः ॥ ४ ॥

मूलकं तु हरिपर्णं सेकिमं हस्तिदन्तकम् ॥ २५६ ॥

मूलमेव मूलकं पुंक्लीबलिङ्गः ॥ १ ॥ हरि नीलं पर्णमस्य हरिपर्णम् ॥ २ ॥ सेकेन निर्वृत्तं सेकिमं "भावादिमः" ॥ ६।४।२१ ॥ इतीमः ॥ ३ ॥ हस्तिदन्तप्रतिकृतिः हस्तिदन्तकम् ॥ ४ ॥ २५६ ॥

तृणं नडादि नीवारादि च

तृणं तृणजातीयमित्यर्थः ॥ १ ॥ नडादि नडप्रकारं नीवारादि नीवारप्रकारमित्यर्थः ॥ २ ॥

शष्पं तु सद् नवम् ।

तत् तृणं नवोद्भिन्नं बालमिति यावत्, शीयते शष्पं पुंक्लीबलिङ्गः 'शादिबाधि-" ॥ (उणा- २९९) ॥ इति पः, षत्वान्तस्य ॥ १ ॥

सौगन्धिकं देवजग्धं पौरं कत्तृणं रौहिषं ॥ २५७ ॥

सुगन्धः प्रयोजनमस्य सौगन्धिकम् ॥१॥ देवैर्जग्धमिवान्तः शुषिरत्वाद् देवजग्धम् ॥ २ ॥ पुरे भवं पौरम् ॥ ३ ॥ कुत्सितं तृणं कत्तृणं 'तृणे जातौ' ॥ ३।२।१३२ ॥ इति कोः कदादेशः ॥ ४ ॥ रोहति यत्र तत्र रौहिषं, पुंक्लीबलिङ्गः "रुहे वृद्धिश्च" ॥ (उणा- ५४८) ॥ इतीषः ॥ ५ ॥ २५७ ॥

दर्भः कुशः कुथो बर्हिः पवित्रं

दृणाति पारुष्याद् दर्भः "गृदृरमि-' ॥ (उणा- ३२७) ॥ इति भः दृश्यतेऽसाविति वा ॥ १ ॥ कौ शेते कुशः पुंक्लीबलिङ्गः 'क्वचित्' ॥ ५।१।१७१ ॥ इति डः ॥ २ ॥ कुथ्नाति कुथः ॥३॥ बृहति बर्हिः, पुंक्लीबलिङ्गः, "बर्हिबृंहेर्नलुक् च" ॥ (उणा ९९०) ॥ इतीस् ॥ ४ ॥ पूयतेऽनेन पवित्रं "ऋषिनाम्नी करणे' ॥ ५।२।८६ ॥ इतीत्रः ॥ ५ ॥

अथ तेजन ।

गुन्द्रो मुञ्ज शर

तेजयति शिनोति वा तेजन ॥ १ ॥ गुणैर्दोषा द्राव्यस्मिन् गुन्द्र, पृषोदरादित्वात् ॥ २ ॥ मुञ्जति वायुना मुञ्ज ॥ ३ ॥ शृणाति पारुष्यात् शर ॥ ४ ॥

दूर्वा त्वनन्ता शतपर्विका ॥ २५८ ॥

हरिताली रुहा

दूर्यते पशुभिः, दूरे वाति वा, पृषोदरादित्वात् ॥१॥ अनन्ता, दूरप्रसरणात् ॥ २ ॥ शत बहूनि पर्वाण्यस्या शतपर्विका ॥ ३ ॥ २५८ ॥ हरिता नीलत्व मलति हरिताली ॥ ४ ॥ रोहति रुहा ॥ ५ ॥

पोटगलस्तु धमनो नड ।

पोटेन सश्लेषेण गलति पोटगल ॥१॥ 'धमि सौत्र' धमत्यन्त शुषिरत्वाद् धमन ॥ २ ॥ नडत्यर्दयति डलयोरैक्ये नड पुम्बालिङ्ग ॥ ३ ॥

कुरुविन्दो मेघनामा मुस्ता

कुरुन् देश विन्दति कुरुविन्द ॥ १ ॥ मेघस्य नामाऽस्य मेघनामा मेघपर्याय, अम्बुवरत्वात् ॥ २ ॥ मुस्यति खण्डयति मुस्ता त्रिलिङ्ग शीरी-" ॥ ( उणा-२०१ ) ॥ इति कित, मुस्तकोऽपि ॥ ३ ॥

गुन्द्रा तु सोत्तमा ॥ २५९ ॥

सा मुस्ता उत्तमा गोद तेऽनया गुन्द्रा "खुरक्षुर-" ( उणा- ३९६ ) ॥ -इति रे निपात्यते, गुणैर्दोषा द्राव्यस्यामिति वा ॥ १ ॥ २५९ ॥

वल्वजा उलप

वलति वल्वजा पुंसि बहुवचनान्त 'वलेरान्तश्च वा" ॥ ( उणा- १३३)॥ इत्यज ॥ १ ॥ दल्ते उलप विष्टपोलप-' ॥ ( उणा- ३०७ ) ॥ इत्यपे निपात्यते ॥ २ ॥

अथेक्षु स्याद् रसालोऽसिपत्रक ।

इष्यते इक्षु पुलिङ्ग "मत्जीष्यशिभ्य सुक्' ॥ ( उणा- ८२६ ) ॥ ॥ १ ॥ रसमलत्यालाति वा रसाल ॥ २ ॥ अस्यासाराणि पत्राण्यस्य असिपत्रक ॥ ३ ॥

भेदा कान्तार-पुण्ड्राद्यास्तस्य

तस्य इक्षोर्भेदा जाताः एकादश, काम्यते कान्तारः, कान्तमृगमियर्तीति वा, कान्ता आरा भागा अस्येति वा ॥ १ ॥ पुनाति पुण्ड्यते वा पुण्ड्रः "खुरक्षुर–" ॥ (उणा– ३९६) ॥ इति रे निपात्यते । आदिशब्दात् कोषकारादयः, यद्वाचस्पतिः –

"पुण्ड्रो पुण्ड्रक भेद्य पौण्ड्रकोऽतिरसो मधुः ।
भेतकाण्डो भीरुकस्तु हरितो मधुरो महान् ॥ १ ॥
दीर्घभरस्तु कान्तार कोपकारस्तु कठर ।
दीर्घपोरश्चीपत्क्षार पातच्छायोऽथ तापस ॥ २ ॥
सितनीलोऽथ नेपालो वंशप्रायो महाबल ।
अन्यथस्तु दीर्घपत्रो दीर्घपर्वा कषायवान् ॥ ३ ॥
काष्ठेक्षुस्तु ह्रस्वकाण्डो घनग्रन्थिर्वनोद्भव ।
नीलपोरस्तु सुरसो नीलपीतलराजिवान् ॥ ४ ॥
अनूपसंभव प्राय रानटी चिक्षुवालिका ।
करङ्कशालि शाकेषु सूचिपत्रो गुडेक्षव ॥ ५ ॥" इति ॥ २ ॥

मूलं तु मोरटम् ॥ २६० ॥

इक्षोर्मूलं मुरति संवेष्टयति मोरटं "कपट–" ॥ (उणा– १४४) ॥ इत्यटे निपात्यते ॥ १ ॥ २६० ॥

काशस्त्विषीका

काशते काशः पुंक्लीबलिङ्गः ॥१॥ इष्यते इषीका "ऋच्यजि–" ॥ (उणा– ४८) ॥ इति किदीकः ॥ २ ॥

घासस्तु यवसं

अद्यते पशुभिर्घासः ॥ १ ॥ यूयते यवसं "वहियु॰या वा" ॥ (उणा– ५७१) ॥ इत्यसः क्लीबलिङ्गोऽयम् । वाचस्पतिस्तु– अथाऽस्त्री यवसो घासः' इति पुंस्यप्याह ॥ २ ॥

तृणमर्जुनम् ।

तरत्यम्भसि तृणं पुंक्लीबलिङ्गः, तृण्यतेऽद्यते पशुभिरिति वा ॥ १ ॥ अर्ज्यतेऽर्जुनम् । सर्वं च तृणमर्जुनम् इति भागुरिः ॥ २ ॥

विषं क्ष्वेडो रसस्तीक्ष्णं गरलं

वेवेष्टि विषं पुंक्लीबलिङ्गः स च द्वेधा स्थावरजङ्गमभेदात्, यदाह–

'कन्दजं कालकूटादि पुष्पजं दालवादिकम् ।
फालमङ्कोल्लसारादि दंष्ट्रादिजं तु जङ्गमम् ॥ १ ॥" इति ॥ १ ॥

'क्ष्विडाड् सौत्र ' क्ष्वेडते मोहयति क्ष्वेड ॥ २ ॥ रसयति रस पुंक्लीव-लिङ्ग ॥ ३ ॥ तेजयति तीक्ष्णम् ॥ ४ ॥ गीर्यते रागिभिगरल "मुरलोरल-" ॥ (उणा-४७४) ॥ इति साधु, गर लातीति वा, पुंक्लीवलिङ्ग ॥ ५ ॥

अथ हलाहल ॥ २६१ ॥
वत्सनाभ कालकूटो ब्रह्मपुत्र प्रदीपन ।
सौराष्ट्रिक शौल्किकेय काकोलो दारदोऽपि च ॥२६२॥
अहिच्छत्रो मेषशृङ्ग कुष्ठ वालुक नन्दना ।
कैराटको हैमवतो मर्कट करवीरक ॥ २६३ ॥
सर्षपो मूलको गौरार्द्रक सक्तुक कर्दमौ ।
अङ्कोल्लसार कालिङ्ग शृङ्गिको मधुसिक्थक ॥ २६४ ॥
इन्द्रो लाङ्गुलिको विस्फुलिङ्ग पिङ्गल गौतमा ।
मुस्तको दालवश्चेति स्थावरा विषजातय ॥ २६५ ॥

हलति विलिखति जठर न हलति चेति हलाहल, यथा-'कस्य सह्यो हलाहल' हालेव हलताति लक्ष्ये हालाहल, यथा-

"स्निग्ध भवत्यमृतकल्पमहो कलत्र
हालाहल विषमिवापगुण तदेव ।"

हालहलोऽपि यथा-'कामसपाथि मयेन्द्रियकुण्डैयवपि दुष्कृतहालहलैघ' । एते पुंक्लीवलिङ्गा ॥ १ ॥ २६१ ॥ वत्सस्येव नाभिरस्य वत्सनाभ ॥ २ ॥ कालस्य वर्णस्य कूटोऽत्र कालकूट, पुंक्लीवलिङ्ग, कालसम्बन्धी कूटो व्याजो वा ॥ ३ ॥ ब्रह्मण पुत्रो ब्रह्मपुत्र, यद् याज्ञवल्क्य -' त्व विष ! ब्रह्मण पुत्र सत्ये धर्मे व्यवस्थित ॥ ४ ॥ प्रदीपयति प्रदीपन ॥ ५ ॥ सुराष्ट्रदेशे भव सौराष्ट्रिक अध्यात्मादित्वादिकण् ॥६॥ शुल्किकादेशे भव शौल्किकेय नद्यादित्वा देयण् ॥ ७ ॥ ईषत् कोलति सस्त्यायति काकोल पुंक्लीवलिङ्ग काकोल काकस्तद्वन्मेचको वा ॥ ८ ॥ दरदि सिन्धुदेशे भवो दारद ॥ ९ ॥ २६२ ॥ अहिच्छत्रदेशे भवत्वादहिच्छत्र ॥ १० ॥ मेषशृङ्गाकारत्वाद् मेषशृङ्ग, यद्वा चस्पति - मेषशृङ्ग त्वविशृङ्गाकृति ॥११॥ कुष्णाति कुष्ठ, कुष्ठसदृशत्वाद् वा यदाह-

"कुष्ठ तु कुष्ठसदृशमुग्रगन्ध भ्रमिप्रदम् ॥" ॥ १२ ॥

वालुकाभो वालुक ॥१३॥ नन्दयति नन्दन ॥१४॥ किराटके म्लेच्छदेशे भव कैराटक ॥ १५ ॥ हिमवति भवो हैमवत ॥ १६ ॥ मर्कटाभो मर्कट ॥ १७ ॥ करवीरमूलजत्वात् करवीर, यदाह- 'करवीर त्वश्वमारमूलज सर्वतो भवम्' ॥१८॥

राम्य इमार्गदा जाय एकादश, काम्यते कान्तार , कान्तमूषमियर्नीति वा, कान्ता आरा भागा अस्मेति वा ॥ १ ॥ पुणति पुण्ड्यते वा पुण्ड्र "क्षुरक्षुर–" ॥ (उणा– ३९६) ॥ इति रे निपात्यते । आदिशब्दात् कोपकारादयः, यद्वाचस्पति –

"पुण्ड्रेक्षौ पुण्ड्रक रोम्य पौण्ड्रकाऽतिरसो मृदु ।
श्वेतकाण्डो भीरुकस्तु हरितो मधुरो महान् ॥ १ ॥
धूर्येभरस्तु कान्तार कोपकारस्तु कठर ।
दातपोरस्तथापत्कार पीतच्छायोऽथ तापस ॥ २ ॥
सितनीलोऽथ नेपालो वंशप्रायो महाबल ।
अन्वयस्तु दीर्घपत्रो दीर्घपत्रा कषायवान् ॥ ३ ॥
काष्ठेक्षुस्तु ह्रस्वकाण्डो धनग्रन्थिवनोद्भव ।
नीलपोरस्तु सुरसो नीलपीतलराजिवान् ॥ ४ ॥
अनूपसभव प्राय रानेटी त्विक्षुवालिका ।
करङ्कशालि शाकेक्षु सूचिपत्रो गुडेक्षव ॥ ५ ॥" इति ॥ २ ॥

मूल तु मोरटम् ॥ २६० ॥

इक्षोर्मूल मुरति सवेष्टयति मोरट "कपट–" ॥ (उणा– १४४) ॥ इत्यटे निपात्यते ॥ १ ॥ २६० ॥

काशस्त्विषीका

काशते काश पुक्लीबलिङ्ग ॥१॥ इष्यते इषीक "ऋच्यृजि–" ॥ (उणा– ४८) ॥ इति किदीक ॥ २ ॥

घासस्तु यवस

अद्यते पशुभिघास ॥ १ ॥ यूयते यवस 'वहियुभ्या वा" ॥ (उणा– ५७१) ॥ इत्यस क्लीबलिङ्गोऽयम् । वाचस्पतिस्तु–'अथाऽस्त्री यवसो घास ' इति पुस्यप्याह ॥ २ ॥

तृणमर्ज्जुनम् ।

तरत्यम्भसि तृण पुक्लीबलिङ्ग , तृण्यतेऽद्यते पशुभिरिति वा ॥ १ ॥ अर्ज्यतेऽर्जुनम् । सर्व च तृणमर्जुनम् इति भागुरि ॥ २ ॥

विष क्ष्वेडो रसस्तीक्ष्ण गरल

वेवेष्टि विष पुक्लीबलिङ्ग , स च द्वेधा स्थावर जगमभेदात् यदाह–

'कन्दज कालकूटादि पुष्पज दालवादिकम् ।
फालमज्जोत्सारादि दष्ट्रादिज तु जगमम् ॥ १ ॥ इति ॥ १ ॥

पृथिव्यादानेकेन्द्रियानभिधाय द्वीन्द्रियानाह—

नीलङ्गु कृमिरन्तर्जे

शरीरस्यान्तर्भव कृमि, नीलति नीलङ्गु, पुलिङ्ग "प्रीकैरे" ॥ (उणा-७६१) ॥ इलङ्गुक् ॥ २१ ॥

क्षुद्रकीटो बहिर्भव ।

बहिर्भव क्षुद्रो ह्रस्व कृमि, कीट्यति कीट, पुस्त्रीलिङ्ग ॥ १ ॥

पुलकास्तूभयेऽपि स्यु

उभयेऽन्तर्भवा बहिर्भवाश्च कृमय पोलन्ति पुलका ॥ १ ॥

कीकसा कृमयोऽणव ॥ २६८ ॥

अणव सूक्ष्मा कृमय, कुत्सित कसन्ति कीकसा, पृषोदरादित्वात् ॥१॥२६८॥

काष्ठकीटो घुण

काष्ठोद्भव कीट काष्ठकीट ॥ १ ॥ घुणति घुण ॥ २ ॥

गण्डूपद किञ्चुलक कुसू ।

भूलता

गण्डा ग्रन्थय पदान्यस्य गण्डूपद ॥ १ ॥ किञ्चित् चुलुम्पति किञ्चुलक "काचक" ॥ (उणा-३३) ॥ इति अके निपात्यते। किञ्चुलुकोऽपि ॥ २ ॥ कोभूमे सूते कुसू, कु मृद सूते वा, मृदुरसगात् ॥ ३ ॥ भुवो लतेव भूलता ॥ ४ ॥

गण्डूपदी तु शिली

गण्डू पदान्यस्या गण्डूपदी ॥ १ ॥ शिलति शिली शिल्याकृतिर्वा ॥ २ ॥

असृपा जलौकस ॥ २६९ ॥

जलालोका जलका च जलौका जलसर्पिणी ।

असृ पिबत्यसृपा 'विचका' इत्येके ॥ १ ॥ जलमोक आसा जलौकस स्त्रियां बहुवचनान्तोऽयम् ॥ २ ॥ २६९ ॥ जले आलोक्यते जलालोका, जले आलोकोऽस्या इति वा ॥ ३ ॥ जलति जलूका "मृमन्यञ्जि" ॥ (उणा-५८) ॥ इत्यूक ॥ ४ ॥ ओकशब्दोऽकारान्तोऽप्यस्ति, जले ओकोऽस्या जलौका ॥ ५ ॥ जले सर्पति जलसर्पिणी ॥ ६ ॥

मुक्तास्फोटोऽब्धिमण्डूकी शुक्ति

॥ २६३ ॥ शणवत् पीतवर्णं गणं ॥ १९ ॥ मूलकामा मूलक ॥ २० ॥ गौरश्चार्द्रकन्दाभ गौरार्द्रक ॥ २१ ॥ सक्तुप्रतिकृति सक्तुक , सक्तुवच्चूर्ण भवनस्यात् ॥ २२ ॥ कर्दमगन्धत्वात् कर्दम ॥ २३ ॥ अङ्गोलकफलाभोऽङ्गारकमार , पृषोदरादित्वात् ॥ २४ ॥ कलिङ्गदेशभव कालिङ्ग , अजस्तनाकृतित्वात् ॥ २५ ॥ शङ्खाकारत्वात् शाङ्खक , यदाह– 'शङ्खिक तु क गवर्णमजनस्तनसमाकृति ' ॥ २६ ॥ मधुरितया मधूच्छिष्ट तद्गन्धत्वात् मधुशिग्रक ॥ २७ ॥ २६४ ॥ इन्दति इन्द्र, इन्द्रशीलभवत्वाद्वा ॥ २८ ॥ लाङ्गुला प्रयोजनमस्य लाङ्गलिक , यदाह– 'लाङ्गलिक सूरणिव लाङ्गुलामूलमेव तत्' ॥ २९ ॥ विरुद्धा स्फुलिङ्गा अस्य विस्फुलिङ्ग ॥ ३० ॥ पाटिरन्ध्र पिङ्गलत्वात् पिङ्गल ॥ ३१ ॥ गौतमस्याय गौतम ॥ ३२ ॥ गुत्सकाभो गुत्सक ॥ ३३ ॥ दलति दालव 'कैरव-' ॥ ( उणा– ५१९ ) ॥ इत्यवे निपात्यते ॥ ३४ ॥ एते सर्वेऽपि स्थावरवनस्पति भवत्वात् स्थावरा विषस्य जातयो भेदा इति ॥ १ ॥ 'एते सर्वेऽपि पुंक्लीबलिङ्गा' इति वाचस्पति ॥ २६५ ॥

कुरण्टाद्या अग्रबीजा

अग्रभागो बीजमुत्पत्तिकारणमेषा अग्रबीजा , आदिशब्दात्पारिभद्राद्या ॥१॥

मूलजास्तूत्पलादय ।

मूलत कन्दाज्जायन्ते मूलजा , आदिशब्दात् सूरणाद्या ॥ २ ॥

पर्वयोनय इक्ष्वाद्या

पर्व योनिरेषा पर्वयोनय , आदिग्रहणात् तृणवंशाद्या ॥ ३ ॥

स्कन्धजा सल्लकीमुखा ॥ २६६ ॥

स्कन्धाज्जायन्ते स्कन्धजा , मुखग्रहणाद् वटाद्या ॥ ४ ॥ २६६ ॥

शाल्यादयो बीजरुहा

बीजात् सस्याद् रोहन्ति बीजरुहा , आदिग्रहणात् षष्टिकमुद्गादय ॥ ५ ॥

समूर्च्छजास्तृणादय ।

समूर्च्छनाज्जायन्ते समूर्च्छजा , आदिग्रहणाद् भूच्छत्राद्या ॥ ६ ॥

उपसहारमाह—

स्युर्वनस्पतिकायस्य षडेता मूलजातय ॥ २६७ ॥

स्पष्टम् ॥ २६७ ॥

॥ समाप्तोऽय वनस्पतिकाय ॥

पिप्पलादिवृक्षजातीना तु नामशेषोऽस्मदुपज्ञनिघण्टोरवसेय ॥

पृथिव्यादानेकेन्द्रियानभिधाय द्वीन्द्रियानाह—

नीलङ्गु कृमिरन्तर्जे

शरीरस्यान्तर्भव कृमि, नीलति नीलङ्गु, पुलिङ्ग "प्रीङ्के" ॥ (उणा–७६१) ॥ इत्यङ्गुक् ॥ २१ ॥

क्षुद्रकीटो बहिर्भव ।

बहिर्भव क्षुद्रो ह्रस्व कृमि, कीट्यति कीट, पुस्त्रीलिङ्ग ॥ १ ॥

पुलकास्तूभयेऽपि स्यु

उभयेऽन्तर्भवा बहिर्भवाश्च कृमय पोलन्ति पुलका ॥ १ ॥

कीकसा कृमयोऽणव ॥ २६८ ॥

अणव सूक्ष्मा कृमय, कुत्सित कसन्ति कीकसा, पृषोदरादित्वात् ॥१॥२६८॥

काष्ठकीटो घुण

काष्ठोद्भव कीट काष्ठकीट ॥ १ ॥ घुणति घुण ॥ २ ॥

गण्डूपद किञ्चुलक कुसू ।

भूलता

गण्डा ग्रन्थय पदान्यस्य गण्डूपद ॥ १ ॥ किञ्चित् चुलुम्पति किञ्चुलक "काचक" ॥ (उणा–३३) ॥ इति अके निपात्यते । किञ्चुलकोऽपि ॥ २ ॥ कोभूमे सूते कुसू, कु मृद सूते वा, मृदुत्सगात् ॥ ३ ॥ भुवो लतेव भूलता ॥ ४ ॥

गण्डूपदी तु शिली

गण्डू पदान्यस्या गण्डूपदी ॥ १ ॥ शिलति शिली, शिन्याकृतिवा ॥ २ ॥

असृपा जलौकस ॥ २६९ ॥

जलालोका जलूका च जलौका जलसर्पिणी ।

असृ पिबन्त्यसृपा 'चिचका' इत्येके ॥ १ ॥ जलमोक आसा जलौकस स्त्रियां बाबहुवचनान्तोऽयम् ॥ २ ॥ २६९ ॥ जले आलोक्यते जलालोका, जले आलोकोऽस्या इति वा ॥ ३ ॥ जलति जलूका "मृमन्यञ्जि" ॥ (उणा–५८) ॥ इत्यूक ॥ ४ ॥ ओकशब्दोऽकारान्तोऽप्यस्ति, जले ओकोऽस्या जलौका ॥ ५ ॥ जले सपति जलसर्पिणी ॥ ६ ॥

मुक्तास्फोटोऽब्धिमण्डूकी शुक्ति

मुक्ता स्फुटत्यस्य मुक्तास्फोट ॥ १ ॥ अब्धेमण्डूकीवाब्धिमण्डूकी ॥२॥ शोचति शुक्ति स्त्रीलिङ्ग "दृशुचि" ॥ ( उणा–६' १ ) ॥ इति क्नि ति ॥३॥

फम्बुस्तु वारिज ॥ २७० ॥

त्रिरेख पोडशावर्त शङ्ख

काम्यते कम्बु पुस्त्रीलिङ्ग "कम्यमिभ्या–" ॥ ( उणा–७९९ ) ॥ इति बु ॥ १ ॥ वारिणो जातो वारिज ॥ २ ॥ २७० ॥ तिस्रो रेखा अस्य त्रिरेख ॥ ३ ॥ षोडश आवर्ता अस्य षोडशावर्त ॥ ४ ॥ शाम्यति शङ्ख पुक्लीबलिङ्ग "शमिमनिभ्याम्–" ॥ ( उणा–८४ ) ॥ इति ख शं सुख खनति, श्रेयो जनयतीति वा क्वचित्" ॥५।१।१७१॥ इति ड ॥ ५ ॥

अथ क्षुद्रकम्बव ।

-शङ्खनका क्षुल्लकाश्च

क्षुद्रा कम्बव क्षुद्रकम्बव सूक्ष्मा नद्यादिजा कृमय ॥ १ ॥ शं खनन्ति शङ्खनका ॥ २ ॥ क्षुयन्ते क्षुल्लका "कीचक–" ॥ ( उणा– ३३ ) ॥ इत्यके निपात्यते ॥ ३ ॥

शम्बूकास्त्वम्बुमात्रजा ॥२७१ ॥

शाम्यन्ति शम्बूका "शम्बूक–" ॥ ( उणा– ६९ ) ॥ इत्यूके निपात्यते । शम्बुकोऽपि ॥ १ ॥ अम्बुमात्रे जाय तेऽम्बुमात्रजा ॥ २ ॥ २७१ ॥

कपर्दस्तु हिरण्य स्यात् पणास्थिक वराटकौ ।

के पदते कपर्द ॥ १ ॥ ह्रियते हिरण्य पुक्लीबलिङ्ग ॥ २ ॥ पणाय व्यवहारायास्थ्यस्य पणास्थिक ॥ ३ ॥ वरमटति वराट व्रियते वा "अनिशृ–" ॥ ( उणा– १४५ ) ॥ इत्याट के वराटक ॥ ४ ॥

शेषश्चात्र– स्यात्तु श्वेत कपर्दक ॥

दुर्नामा तु दीर्घकोशा

दुष्टो नामो नमनमस्या दुर्नामा 'दु सञ्ज्ञा इत्येके ॥ १ ॥ दीर्घ कोशोऽस्या जलकाकारत्वाद् दीर्घकोशा दीर्घा कुश्यतीति वा ॥ २ ॥

॥ उक्ता द्वीन्द्रिया ॥

त्रीन्द्रियानाह—

पिपीलकस्तु पीलक ॥ २७२ ॥

अपिपीलति पिपीलक, पृषोदरादित्वादपे पि ॥ १ ॥ पीलति पीलक ॥ २ ॥ २७२ ॥

पिपीलिका तु हीनाङ्गी

पीलति पिपीलिका "कुशिक-" ॥ ( उणा- ४५ ) ॥ इतीके निपात्यते ॥ १ ॥ हीनमङ्गमस्या हीनाङ्गी ॥ २ ॥

ब्राह्मणी स्थूलशीर्षिका ।

बृहति ब्राह्मणी "निक्ण-" ॥ ( उणा- १९० ) ॥ इत्यणे निपात्यते ॥ १ ॥ स्थूल शार्षमस्या स्थूलशापिका ॥ २ ॥

घृतेली पिङ्गकपिशा

घृतेन ईर्यते प्रेर्यते घृतेली ॥ १ ॥ पिङ्ग हीबेर तद्वत् कपिशा पिङ्ग कपिशा ॥ २ ॥

अथोपजिह्वोपदेहिका ॥ २७३ ॥

वम्र्युपदीका

उपलेढि उपजिह्वा उप समीपे जहातीति वा "प्रहाह्वा-" ॥ ( उणा- ५१४ ) ॥ इति वे निपात्यते ॥ १ ॥ उपदिह्यते मृदनया उपदेहिका ॥ २ ॥ ॥ २७३ ॥ वमति मृद वम्री 'भीवृधि-" ॥ ( उणा- ३८७ ) ॥ इति र ॥ ३ ॥ उप समीपे ददाति उपदीका 'स्थाक-" ॥ ( उणा- ५० ) ॥ इतीके निपात्यते ॥ ४ ॥

रिक्षा तु लिक्षा

रेषति रिक्षा ऋनिरिपि-" ॥ ( उणा- ५६७ ) ॥ इति क्सि स ॥ १ ॥ लत्वे लिक्षा ॥ २ ॥

यूका तु षट्पदी ।

यौति यूका 'युयुहि-" ॥ ( उणा- २४ ) ॥ इति को दीर्घत्व च ॥ १ ॥ षट् पादा अस्या षट्पदी सुमङ्गल्यात्' ॥ ७ । ३ । १५० ॥ इति पान्त्यावे 'वा पाद' ॥ २ । ४ । ६ ॥ इति ङा ॥ २ ॥

गोपालिका महाभीरु

गा पलति गच्छति गोपालिका ॥ १ ॥ अतिशयेन भीरुमहाभीरु ॥ २ ॥

गोमयोत्था तु गर्दभी ॥ २७४ ॥

गोमयादुत्तिष्ठति गोमयोत्था ॥ १ ॥ गर्दभवणत्वाद् गदभी ॥२॥२७४॥

मत्कुणस्तु कोलकुण उद्दंश किटिभो त्कुणौ ।

